Registered according to Act XXV. of 1867.

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE.

*No 154.*

—:o:—

# ज्यौतिषसिद्धान्तसंग्रहः ।

तत्र

## पितामहसिद्धान्तः, वृद्धवसिष्ठसिद्धान्तश्च ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्षेण

महामहोपाध्यायविन्ध्येश्वरीप्रसादद्विवेदिना संस्कृतः ।

# JYAUTISHA SIDDHÁNTA SAṂGRAHA;

A COLLECTION OF

**ANCIENT HINDU ASTRONOMICAL WORKS.**

## PITÁMAHA SIDDHÁNTA & VRIDDHAVASISHṬHA SIDDHÁNTA

EDITED BY

MAHÁMAHOPÁDHYÁYA

VINDHYEŚVARÍ PRASÁDA DVIVEDÍ,

**LIBRARIAN, GOVT. SANSKRIT COLLEGE, BENARES.**

Fasciculus II.

*BENARES:*

**PUBLISHED BY BRAJ BHUSHAN* DAS & Co.,**

**C. K. 40/5 Thatheri Bazar, Near the Chauk.**

Subject matter printed by Krishna Das Gupta at the

Benares Printing Press.

*AND COVER*

**Printed by Bhagavati Prasad B. A. at the Medical Hall Press, Benares.**

**1917.**

* Formerly the publisher's name was put down in the abstract form "Braj B. Das & Co.," but now the full name is given *i. e,* "Braj Bhushan Das & Co.," so the customers are requested not to take it as another firm altogether.

# अथ पितामहसिद्धान्तः ।

श्रीगणेशाय नमः ।

## पुष्कर उवाच ।

अथ भगवन्तं भुवनोत्पत्तिस्थितिसंहारकारकं चराचरगुरुं प्रतियशसं समधिगम्य भृगुर्विज्ञापयामास। भगवन् ज्योतिःशास्त्रं विना गणितेन दुरवगाह्मतो गणितविधिमाचक्ष्व । तमुवाच श्रीभगवान् । शृणु वत्स गणितज्ञानम् । अनादिनिधनकालः प्रजापतिर्विष्णुः । तस्य ग्रहगत्यनुसारेण ज्ञानं गणितम् । तत्रार्कस्य भागभोगः सौराहोरात्रम् । तिथिश्चान्द्राहः । अर्कोदयात् सावनः । चन्द्रनक्षत्रभोगेन नाक्षत्राहोरात्रम् । सावनाहोरात्रं नराणाम् । सार्कं तेषां दिनम् । व्यर्का रात्रिः । चन्द्रमसश्चान्द्रमासः पितृणामहोरात्रम् । तेषां कृष्णाष्टम्यामर्कोदयः । अमावास्यायां मध्याह्नः । शुक्लाष्टम्यामस्तसमयः । पौर्णमास्यामर्धरात्रम् । अर्कस्य भगणभोगः दिव्याहोरात्रम् । तेषामर्कस्य मेषप्रवेशे सूर्योदयः कर्कटप्रवेशे मध्याह्नः । तुलाप्रवेशेऽस्तसमयः । मकरप्रवेशेऽर्धरात्रम् । मेषादिस्थे मध्यमे जीवे जीवमा-

नैराश्वयुजादयो वत्सरा भवन्ति । लङ्कायामर्कोदये चैत्रशुक्लप्रतिपदारम्भेऽर्कदिनादावश्विन्यादौ किंस्तुघ्नादौ रौद्रादौ वारप्रवृत्तिः होरादिप्रवृत्तिश्च । लङ्कातश्च यावन्मेरोर्याम्योत्तरा देशान्तररेखा तत् पूर्वेणापरेण च । लङ्कार्कोदये कालप्रवृत्तिः । लङ्कार्कोदयकालस्तन्मण्डलम् । स्वदेशविषुवार्कोदयो विषुवन्मण्डलम् । प्रतिदिनं चरदलवशेनार्कोदयः क्षितिजोन्मण्डलम् ।

तत्रार्कभगणभोगेन सौराब्दः । तेषामब्दानां शून्यत्रयनयनगुणवेदाः कलिः ४३२००० । द्विगुणं द्वापरः ८६४००० । त्रिगुणं १२९६००० त्रेता । चतुर्गुणं १७२८००० कृतम् । शून्यचतुष्टययमाग्निवेदाश्चतुर्युगम् ४३२०००० । एकसप्ततिश्चतुर्युगानि मन्वन्तरम् । चतुर्दशमन्वन्तराणि कल्पः । मन्वन्तराणां चाद्यन्तरालेषु कृतयुगप्रमाणं १७२८००० सन्धिः । एवं चतुर्युगसहस्रं कल्पः । कल्पे सप्त शून्यानि यमाग्निवेदाः ४३२००००००० रविभगणपरिवर्त्तनानि भवन्ति । पञ्चशून्यानि गुणाग्निपञ्चसप्तागपञ्च चन्द्रमसः ५७७५३३००००० । भौमस्य द्वयद्वयपञ्चाष्टयमाष्टषड्नवयमयमलाः २२९६८२८५२२ । बुधस्य वेदाष्टनवाष्टनवनवरसाग्निनवसप्तचन्द्राः १७९३६९९८९८४ । जीवस्य पञ्चपञ्चाब्धिषट्पञ्चाद्विकृत-

रसगुणाः ३६४२२६४५५। शुक्रस्य यमनवाब्धिनवाष्टाग्नियमयमखगिरयः ७०२२३८९४९२। सौरस्याष्टनवयमगिरिरसेषुषबाणनवः १४६५६७२९८। आदित्योच्चस्य गगनाष्टाब्धयः ४८०। चन्द्रोच्चस्याष्टार्थवस्वर्थदिग्वस्वष्टवेदाः ४८८१०५८५८। कुजमन्दस्य यमनवपक्षाः २९२। बुधमन्दस्य द्वित्रिगुणाः ३३२। जीवमन्दस्य बाणशरवसवः ८५५। शौक्रमन्दस्य गुणशरर्तवः ६५३। सौरमन्दस्य शशिवेदाः ४१। चन्द्रपातस्य वसुरसशशिरुद्राग्निदस्रानलयमलाः २३२३१११६८। भौमपातस्य महीधरर्तुयमलाः २६७। बुधपातस्य चन्द्रद्यर्थाः ५२१। गुरोः पातस्य गुणरसाः ६३। शुक्रपातस्य त्रिनववसवः ८९३। सौरपातस्य वेदाष्टशराः ५८४।

अष्टशून्यानि यमनवरसखरविमुनिवसुनिशाकराः खकक्षा १८७१२०६९२०००००००००। सर्वग्रहाणां प्राग्यायिनां खकक्षाध्वनो यस्य भगणैर्भागो ह्रियते तस्यैव कक्षायोजनानि लभ्यन्ते। यस्य बहवो भगणपरिवर्त्ताः तस्योपरि तस्य कक्षा। यस्याल्पा तस्याधः। कक्षावर्गदशभागमूलं कक्षाकर्णः। तदूर्ध्वेनोपरि भुवो ग्रहावस्थानम्। कर्णवर्गस्य दशगुणस्य मूलं कक्षा। एवं सर्ववृत्तानां परिधिव्यासानयनम्। यत्र च सर्वग्रहाणामेकत्वमेव दृश्यते सा खखरसेन्द्रयमकक्षा। खख-

सेन्दुयमैर्यस्यैव कक्षा विभज्यते तस्यैव लिप्तायोजनानि लभ्यन्ते । कल्पाब्दयोजनसमा खकक्षा । यदन्तः खं वितिमिरं रविः करोति ।

खखाब्धतत्त्वोऽर्कमण्डलप्रमाणम् । खाष्टवेदाश्चन्द्रमसः । पञ्चदश भौमस्य । षष्टिर्बुधस्य । खार्का जीवस्य । खखयमाः शुक्रस्य । त्रिंशत् सौरस्य ।

द्वादशषष्ट्यांशाश्चन्द्रमसः । सप्तदश भौमस्य । त्रयोदश बुधस्य । एकादश जीवस्य । नव शुक्रस्य । पञ्चदश सौरस्य ।

त्रिभागोनाश्चतुर्दश भागाः सूर्यस्य । एकत्रिंशत् भागाः षट्त्रिंशल्लिप्तायुताश्चन्द्रमसः । सप्ततिर्भौमस्य । वसुरामा बुधस्य । गुणरामा जीवस्य । भवाः शुक्रस्य । त्रिंशत् शनैश्चरस्य एवं मन्दपरिधयः ।

भौमस्य शीघ्रपरिधिर्गुणवेदाब्धिभागाः । बुधस्य भागा यमाग्निचन्द्राः । वसुरसा जीवस्य । वसुबाणदस्राः शुक्रस्य । पूर्णाब्धयः सौरस्य । परिधिवशेनोर्ध्वमधश्च ग्रहगतिर्ज्ञेया ।

खखरसेन्दुयमलानां २१६०० षण्णवतिभागः प्रथमज्या । एवं प्रथमज्यायाः प्रथमजीवया भागमुद्धृत्यावाप्तं प्रथमज्यायाः शोध्यं द्वितीयं ज्यान्तरम् । प्रथमज्याद्वितीयज्यान्तरयोगो द्वितीयज्या । द्वितीय-

ज्यायाः प्रथमज्योवाप्तं द्वितीयज्यान्तरात् संशोध्य तृतीयज्यान्तरम् । तद्द्वितीयज्यायोगस्तृतीयज्या । ततः प्रथमजीवाप्तं तृतीयज्यान्तरात् संशोध्य चतुर्थजीवान्तरम् । तत्तृतीयज्यायोगश्चतुर्थी ज्या । तस्याः प्रथमजीवया भागमपहृत्यावाप्तं चतुर्थज्यान्तरात् संशोध्य पञ्चमज्यान्तरम् । तच्चतुर्थजीवायां दत्त्वा पञ्चमी ज्या । पञ्चमज्यायाः प्रथमजीवया भागमपहृत्यावाप्तं पञ्चमज्यान्तरे संशोध्य षष्ठं ज्यान्तरम् । तत्पञ्चमजीवायां दत्त्वा षष्ठी ज्या । ततः षष्ठज्यायाः प्रथमजीवया भागमपहृत्यावाप्तं षष्ठज्यान्तरात् संशोध्य सप्तमज्यान्तरम् । तत् षष्ठजीवायां दत्त्वा सप्तमी ज्या । ततः सप्तमज्यायाः प्रथमजीवया भागमपहृत्यावाप्तं सप्तमज्यान्तरात् संशोध्य अष्टमं ज्यान्तरम् । तदन्तरं सप्तज्यायां दत्त्वा अष्टमी ज्या । ततः अष्टमज्यायाः प्रथमज्यया भागमपहृत्यावाप्तमष्टमज्यान्तरात् संशोध्य नवमं ज्यान्तरं स्यात् । तदष्टमजीवायां दत्त्वा नवमी ज्या । ततः नवमज्यया भागमपहृत्यावाप्तं नवमज्यान्तरात् संशोध्य दशमं ज्यान्तरं स्यात् । तन्नवमज्यायां दत्त्वा दशमी ज्या स्यात् । ततो दशमज्यायाः प्रथमज्यया भागमपहृत्यावाप्तं दशमज्यान्तरात् संशोध्य एकादशज्यान्तरं स्यात् । तत्

दशमज्यायां दत्त्वा एकादशी ज्या स्यात् । तत् एकादशज्यायाः प्रथमज्याहृताया अवाप्तमेकादशज्यान्तरात् संशोध्य तद् द्वादशज्यान्तरं स्यात् । तदेकादशज्यायां दत्त्वा द्वादशी ज्या स्यात् । द्वादशज्यायाः प्रथमज्यया भागमपहृत्यावाप्तं द्वादशज्यान्तरात् शोध्यं तत् त्रयोदशज्यान्तरं स्यात् । तत् द्वादशज्यायां दत्त्वा त्रयोदशी ज्या स्यात् । ततस्त्रयोदशज्यायाः प्रथमज्यया भागमपहृत्यावाप्तं त्रयोदशज्यान्तरात् शोध्यं चतुर्दशज्यान्तरं भवति । तत् त्रयोदशज्यायां दत्त्वा चतुर्दशी ज्या स्यात् । ततश्चतुर्दशज्यायाः प्रथमज्यया भागमपहृत्यावाप्तं चतुर्दशज्यान्तरात् शोध्यं पञ्चदशज्यान्तरम् । तत् चतुर्दशज्यायां दत्त्वा पञ्चदशी ज्या स्यात् । ततः पञ्चदशज्यायाः प्रथमज्यया भागमहृत्यावप्तं पञ्चदशज्यान्तरात् संशोध्यं षोडशज्यान्तरं स्यात् । तत् पञ्चदशज्यायां दत्त्वा षोडशी ज्या स्यात् । ततः षोडशज्यायाः प्रथमज्यया भागमपहृत्यावाप्तं षोडशज्यान्तरात् शोध्यं सप्तदशज्यान्तरम् । तत् षोडशज्यायां दत्त्वा सप्तदशी ज्या स्यात् । ततः सप्तदशज्यायाः प्रथमज्यया भागमपहृत्यावाप्तं सप्तदशज्यान्तरात् शोध्यमष्टादशज्यान्तरम् । तत् सप्तदशज्यायां दत्त्वाऽष्टादशी ज्या स्यात् । ततोऽष्टादशज्यायाः प्रथमज्यया भागमपहृत्या-

वाप्तमष्टादशज्यान्तरात् शोध्यमेकोनविंशज्यान्तरं स्यात्। तदष्टादशज्यायां दत्त्वा एकोनविंशी ज्या स्यात्। तत एकोनविंशज्यायाः प्रथमज्यया भागमपहृत्यावाप्तमेकोनविंशज्यान्तरात् शोध्यं विंशज्यान्तरं स्यात्। तत् एकोनविंशज्यायां दत्त्वा विंशतिज्या स्यात्। ततो विंशतिज्यायाः प्रथमज्यया विभज्यावाप्तं विंशज्यान्तरात् शोध्यं एकविंशज्यान्तरं स्यात् तत् विंशज्यायां दत्त्वा एकविंशी ज्या स्यात्। एकविंशतिज्यायाः प्रथमज्यया भक्तमवाप्तमेकविंशज्यान्तरे शोध्यं द्वाविंशज्यान्तरं स्यात्। एकविंशज्यायां दत्त्वा द्वाविंशी ज्या स्यात्। ततो द्वाविंशज्यायाः प्रथमज्यया भक्तं लब्धोनद्वाविंशज्यान्तरं त्रयोविंशज्यान्तरं स्यात्। तद् द्वाविंशज्यायां दत्त्वा त्रयोविंशी ज्या स्यात्। ततः प्रथमज्याप्तं त्रयोविंशज्यान्तरात् संशोध्यं चतुर्विंशज्यान्तरं स्यात् तत् त्रयोविंशजीवायां दत्त्वा चतुर्विंशज्या स्यात्।

खखरसेन्दुयमाः स्वकलाया व्यासार्धं स्यात्। तदेवानुपदव्यासेन ज्यान्तराणां व्यस्तानामन्तरालयोगे चतुर्विंशतिः शरा भवन्ति। क्रमज्याकृतिव्यासार्धवर्गतः शोध्या तन्मूलं तत्कोटिज्या। कोटिज्योनं व्यासार्धं शरः। यासां लिप्तानां जीवा क्रियते तत्के-

न्द्रस्य राशित्रयं पदाख्यम् । प्रथमपदे तदेव । द्वितीय-पदे तदूनं षड्भम् । तृतीयपदे षड्भोनकेन्द्रम् । चतुर्थ-पदे चक्राटूनं ज्याकेन्द्रम् । लिप्ता राशिलिप्ताष्टभागेन भाज्याः । लब्धाङ्कसमा ज्या स्थाप्या । अवशेषमनन्तर-ज्यान्तरेण गुणयेद्राशिलिप्ताष्टभागेन विभजेल्लब्धं स्थापितजीवायां दत्त्वेष्टज्यासिद्धिः । कालप्रमाणेभ्यो लिप्तात्वेन परिकल्पितेभ्यो जीवा कार्या। अभीष्टजीवातो यावन्ति ज्यान्तराणि शुद्ध्यन्ति तावन्ति शोध्यानि । अवशिष्टं राशिलिप्ताष्टभागहतं ज्यान्तरेण विभजेत् तत्संख्याहतराशिलिप्ताष्टभागलिप्तासु क्षिपेत् चाप-भागाः स्युः। शरान्तरैरेवं शरचापभागाः । भागचतुर्विं-शतिज्या परमापक्रमज्या । मेषादिस्थो विषुवल्लेखास्थो ग्रहो भवति । कुलीरस्थश्चोत्तरेण परमापक्रमान्त-रस्थो भवति । तुलादिस्थो विषुवल्लेखास्थः । मकरादिस्थो दक्षिणेन परमापक्रमान्तरेण भवति । ग्रहज्यां परमापक्रमज्यया हतां व्यासार्धेन विभजेल्लब्धं क्रान्तिज्या । तच्चापं क्रान्तिः क्रमसिद्धा । तत्र ग्रहाणां कर्कटादि दक्षिणायनं मकराद्युत्तरम् । मेषाद्युत्तरगोलः । तुलादिर्दक्षिणगोलः । गोलवशे-नापक्रमदिक् । स्फुटग्रहज्यां परमशरहतां व्यासा-

र्धेन विभजेत्। लब्धं क्रान्त्यग्रे शरो ग्रहाणामर्कवर्ज्यमुत्तरे दक्षिणे च विक्षिप्तिरस्ति।

अथ चन्द्रादीनां मध्यमविक्षेपाः। शून्यमुनियमाः २७०, शून्याशाः ११०, यमशरेन्दवः १५२, रसागाः ७६, षड्गुणेन्दवः १३६, खाग्निभुवः १३०। चन्द्रपातयोगकेन्द्रजीवां चन्द्रमध्यमविक्षेपहतां व्यासार्धेन विभजेल्लब्धं चन्द्रस्फुटविक्षेपः। तात्कालिकस्फुटग्रहस्फुटपातयोगज्यां भौमजीवसौराणां मध्यविक्षेपहतां स्फुटान्त्यकर्णेन विभजेल्लब्धं तेषां स्फुटविक्षेपः। बुधशुक्रयोस्तु तात्कालिकशीघ्रोच्चस्फुटपातयोगज्यां स्वमध्यविक्षेपहतां स्फुटान्त्यशीघ्रकर्णेन विभजेल्लब्धं तयोः स्फुटविक्षेपः। क्रान्तिचापस्फुटविक्षेपयोर्दिगैक्ये योगो भेदे वियोगो यद्दिक् शिष्यते सा स्पष्टक्रान्तिः। तस्या योगवियोगतः शिष्यते या दिक् तद्गोलस्थो ग्रहो भवति। एवं ग्रहाणामुत्तरेण दक्षिणेन च गतिर्ज्ञेया। भचक्रवशेनोदयास्तमयौ कुर्वन्तः पश्चिमेन यान्ति पूर्वां व्रजन्तो भगणपरिवर्त्तान् कुर्वन्ति। तत्र च सूर्योच्चपातैः सममेव लङ्कादक्षिणोत्तरं गत्वा फाल्गुनान्ते सर्व एव कल्पादावर्कोदये मीनमेषसन्धिगा भवन्ति कल्पावसाने च। मेषप्रवेशे वा-

भानोर्गगनमध्यवर्त्तिन्यादित्ये द्वादशाङ्गुलशङ्कुना समावनौ छाया ग्राह्या । तद्वर्गे व्यासार्धवर्गहृते छायाशङ्कुवर्गयोगेन विभजेल्लब्धमक्षज्यावर्गो भवति । तत्पदमक्षज्या तच्चापं स्वदेशाक्षांशाः । तान् राशित्रयादपास्य स्वदेशावलम्बको भवति । तज्ज्या लम्बज्या । त्रिज्यावर्गस्य क्रान्तिज्यावर्गोनस्य पदं स्वाहव्यासार्धम् । तस्य च क्रान्तिवशेन दिक् । स्वक्रान्तिर्विषुवच्छायाहता शङ्कुहृता क्षितिज्या । त्रिज्याहता सा स्वाहव्यासार्धभाजिता चरज्या तद्धनुश्चरार्धप्राणाः । तद्घटिकाभिः पञ्चदशघटिका युता दिनार्धम् । एवमूना राज्यर्धम् । एवमुत्तरगोले । दक्षिणे व्यस्तम् । एकद्वित्रिराशिज्यानां वर्गाः स्वस्वक्रान्तिज्यावर्गोनास्तन्मूलानि व्यासार्धगुणितानि स्वस्वाहव्यासार्धैर्भागहाराः । अत्राप्तधनुषामधोऽधः शोधनेन व्यक्षराश्युदयप्राणा मेषवृषभमिथुनानां क्रमेण । कर्कसिंहकन्यानामुत्क्रमेण । तुलावृश्चिकधनुर्धराणां क्रमेण । मकरकुम्भमीनानामुत्क्रमेणोदयाः । मेषवृषभमिथुनादिजीवाभ्यश्चरप्राणाः कर्त्तव्याः । तेषामधोधःशोधनेनैकद्वित्रिराशिचरप्राणाः । तैः क्रमेण मेषवृषमिथुनोदयप्राणा हीनाः । उत्क्रमेण कुलीरसिंहकन्यानां युक्ताश्च ।

ते स्वदेशराश्युदयप्राणा भवन्ति। त एव व्युत्क्रमेण तुलादीनां मीनान्तानामपि। अभीष्टदिने मध्याह्ने छायाग्रमूलं याम्योत्तरा। तन्मूलाग्रोपरि-रेखामत्स्यमुखपुच्छरेखा प्राच्यपरा। आदित्यचन्द्रयो-रन्यतरस्य देशान्तरकर्म विना ग्रहणं कार्यम्। तद्यथाऽऽगते काले यदि भवति तदा रेखामध्ये स्वदेशो ज्ञेयः। अथादौ रेखापश्चात्। पश्चात् प्राक्। तत्कालान्तरं षष्टिहृतं पञ्चभिः सह-स्रैर्भजेल्लब्धं देशान्तरयोजनानि। ग्रहस्यार्धरा-त्रान्मध्याह्नं यावत् पूर्वकपालः। मध्याह्नादर्ध-रात्रं यावदपरकपालः। तत्रार्कस्य कंचित् कालम-वलम्ब्य छायाद्वयं गृह्णीयात्। तत्कर्णौ व्यत्यासेन। शङ्कुप्राच्यपरान्ते तयोरन्तरं विषुवच्छाया ग्रहणम्। इष्टेऽह्नि इष्टदिनवैषुवभाद्यान्तरम्। एकदिगभिमुखी-भ्यश्छायाभ्यो भिन्नाभ्यो युक्तः सूर्यापक्रमः। तेन त्रिज्या हता परमापक्रमज्यया विभजेल्लब्धचा-पमर्कः प्रथमपदे। द्वितीये षड्भ्यः शुद्धः। तृतीये षड्भयुक्तः। चतुर्थे चक्रात् शुद्धः। विषुवच्छा-यातः तरूणां छाया हीयमाना प्रथमपदे। ऊना वृद्धिमती द्वितीयपदस्थे। वृद्धिमत्यधिका तृतीयपदस्थे। हीयमानाऽधिका चतुर्थपदस्थे।

एवमतीतदिवसार्कस्य तदर्कस्य विवरं स्फुट-भुक्तिः। आदित्योदयास्तमयाद्वा चन्द्रोदयं दृष्ट्वा लग्न-वत् साधितोऽर्कस्तेन कालेन चन्द्रमा भवति। चन्द्रान्न क्षत्रज्ञानम्। चन्द्रार्कविवरात् तिथिविज्ञानम्। तस्मादहर्गणः। स्फुटार्काद्विपरीतकर्मणा मध्य-मार्कः। सौरजीवयोश्चारात् संवत्सरः। चन्द्रवत् सर्वग्रहक्रिया। ग्रहेभ्यो वा कल्पगतकालज्ञानम्। एवं कालपरिच्छेदः।

अश्विन्यादीनां ध्रुवका राश्याद्याः। खम् ०, अष्टौ ८। खम् ०, खयमाः २०। शशी १, मुनयः ७, अष्टयमाः २८। शशी १, नवेन्दवः १९, अष्टयमाः २८। पक्षौ २, गुणाः ३। पक्षौ २, शैलाः ७। गुणाः ३, गुणाः ३। गुणाः ३, षोडश १६। त्रीणि ३, अष्टादश १८। वेदाः ४, रन्ध्राणि ९। वेदाः ४, सप्तयमाः २७। शराः ५, शराः ५। शराः ५, नखाः २०। रसाः ६, गुणाः ३, पुष्करम् ०। रसाः ६, नवेन्दवः १९। शैलाः ७, पक्षौ २, शराः ५। मुनयः ७, मनवः १४, भूतानि ५। सप्त ७, नवेन्दवः १९, पञ्च ५। अष्टौ ८, चत्वारः ४। अष्टौ ८, नव ९, वसवः ८, नव नखाः २०। अष्टौ ८, तत्त्वानि २५। नव ९, वसवः ८। नव ९, नखाः २०। दश १०, नखाः २०।

दश १०, षड्यमाः २६। शर्वाः ११, मनवः १४, खचन्द्राः १०।

अथैतेषां विक्षेपाः। दश १०, द्वादश १२, पञ्च ५, पञ्च ५, दश १०, एकादश ११ षट् ६, खं०, सप्त ७, खं०, द्वादश १२, त्रयोदश १३, एकादश ११, द्वौ २, अष्टत्रिंशत् ३८,(१) सार्धत्रीणि ३।३०, सर्धाष्टौ ८।३०, सत्रिभागाः पञ्च ५।२०, पञ्च ५, द्विषष्टिः ६२, त्रिंशत् ३०, षट्त्रिंशत् ३६, खं०, चतुर्विंशतिः २४, षड्विंशतिः २६, शून्यं०, च।

तत्राश्विनीभरणीकृत्तिकापुनर्वसुपुष्यमघाभाग्यार्यम्णस्वातीवैश्वदेवाभिजिच्छ्रवणधनिष्ठाजाहिर्बुध्न्यरेवतीनामुत्तराः। रोहिणीसौम्याहिसार्पहस्तचित्राविशाखामैत्रेन्द्रमूलाप्यवारुणानां याम्याः। रेवत्युदयः प्राची। सर्वस्य महती योगतारा। राशिद्वयं सप्तविंशतिभागा अगस्त्यध्रुवकः। षट्सप्ततिभागैस्तस्य याम्यो विक्षेपः।

अथ भौमादीनां वक्रकेन्द्राणि राश्यादीनि। पञ्च ५ मनवः १४ खम् ०। वेदाः ४ षड्यमाः २६ खम् ०। वेदाः ४ पञ्च ५ खम् ०। पञ्च ५ पञ्चदश १५ खम् ०। वेदाः ४ त्रयोदश १३

(१) सार्धैकम् १।३०, द्वौ, अस्य त्रुटिरिति।

२

खम् ० । अथानुगकेन्द्राणि । षड् ६ षोडश १६ खम् ० । सप्त ७ वेदाः ४ खम् ० । सप्त ७ पञ्चयमाः २५ खम् ० । षट् ६ पञ्चदश १५ खम् ० । सप्त ७ सप्तदश १७ खम् ० ।

अथ पूर्वोदये केन्द्राणि खम् ० अष्टयमाः २८ । षड् ६ पञ्चविंशतिः २५ । खं ० मनवः १४ । षट् ६ गुणाः ३ । खम् ० सप्तदश १७ ।

अथ पश्चादस्तमयकेन्द्राणि । एकादश ११ द्वौ २ । पञ्च ५ पञ्च ५ खम् ० । एकादश ११ षोडश १६ । पञ्च ५ शप्तविंशतिः २७ । एकादश ११ त्रयोदश १३ ।

अथ बुधशुक्रयोः(१) पूर्वास्तमयकेन्द्रे । दश १० दश १० खम् ० । एकादश ११ षट् ६ ।

चत्वारि शून्यानि पञ्चवेदरसाग्नियमपक्षाष्टशरेन्दवः १५८२२३६४५०००० कल्पे नक्षत्रोदयाः । त एवार्कभगणोनाः कुदिवसाः । अर्कभगणा द्वादशहतास्तन्मासाः । ते च त्रिंशद्गुतास्तद्दिवसाः । चन्द्रभगणाः सप्तविंशतिहता नक्षत्रदिवसाः । भगणान्तरमर्केन्द्वोश्चान्द्रमासाः । ते च त्रिंशद्गुणास्तद्दि-

(१) बुधशुक्रयोः पाश्चिमोदयकेन्द्राणि एकः १ विंशतिः २० । खं० चतुर्विंशतिः २४ । अस्य त्रुटिरिति ।

धसाः । चान्द्रमासाः सूर्यमासोना अधिमासाः । चान्द्रसावनान्तरमवमानि ।

इति विष्णुधर्मोत्तरे पितामहसिद्धान्ते उपकरणाध्यायः ।

अथ यथाकालं गतमनवस्त्वेकसप्ततिहताश्चतुर्युगाब्दहताः कार्याः । तेषु कृतप्रमाणं चेष्यम् । तदेव तत्र भूयोगतसंख्याहतं च । ततो वर्त्तमानयुगाच्चैत्रप्रारम्भे गताब्दानि । एवं स्वेष्टकालाब्दगणो भवति । स द्वादशहतश्चैत्रसितादिमासयुतस्त्रिंशद्गुणो गतसितादितिथिसहितः कार्यः । एवं सौरदिनगणो भवति । तं पृथक् कल्पाधिमासहतं कल्परविदिनैर्भजेल्लब्धं गताधिमासाः । तैस्त्रिंशद्गुणैरर्काहर्गणो युक्तो चान्द्राहर्गणो भवति । तं पृथक् कल्पावमहतं कल्पचन्द्रदिनैर्विभजेल्लब्धं गतोनरात्रिः । तैश्चन्द्राहर्गण ऊनः सावनाहर्गणो भवति । अधिमासशेषकस्य कल्परविमासैर्हृते एष्याधिमासकगतदिनादिः कालो लभ्यते । अधिमासशेषं कल्परविदिनेभ्यः शोध्यमवशेषस्य कल्पाधिमासैर्भागे हृते एष्याधिमासे एष्यकालो लभ्यते । अवमशेषस्य कल्पोनरात्रैर्भागे हृते एष्योनरात्रकालः । अवमशेषं चन्द्रदिनेभ्यः संशोध्य कल्पोनरात्रैर्भागे हृते एष्योनरात्रकालः ।

संवत्सरात् पञ्चहृतात् अवशेषो वत्सराद्यो ज्ञेयः। आदित्यश्चन्द्रो भौमो बुधो जीवः सितः सौरश्चेति क्रमो ग्रहाणाम्। संवत्सरात् सप्तहृतावशेषं चतुर्थक्रमेण संवत्सराधिपो भवति। चन्द्राब्ददिनगणात् सप्तहृतात् क्रमेणैव दिवसाधिपाः। चन्द्रदिनगणात् अशीत्यधिकशतहृताल्लब्धं सप्तहृतमवशेषं पर्वपः। ब्रह्मचन्द्रेन्द्रवैश्रवणाग्नियमेशाश्च पर्वपाः। दिनगणमिष्टग्रहभगणगुणं भूदिनैर्विभजेल्लब्धं भगणादिर्लङ्कार्कोदये ग्रहो भवति। चरमितकालेन ग्रहस्यैकदिवसभुक्तिं संगुण्य षष्ट्या विभजेदवाप्तं रव्युदये ऋणम्। अस्तमिते धनम्। एवमुत्तरगोले। दक्षिणगोले विपरीतम्। देशान्तरयोजनानि षष्ट्या संगुण्य पञ्चभिः सहस्रैर्भजेल्लब्धं रेखाप्राग्भागे शोध्यम्। अपरस्मिन् देयम्। एवमिष्टदेशे इष्टकाले ग्रहो भवति। तत्कालार्कचन्द्रौ मन्दकर्मणैव स्फुटौ कार्यौ। भौमः कर्मचतुष्टयेन। मन्दं शीघ्रं मन्दं शीघ्रमिति कर्माणि। अन्येषां शीघ्रमन्दकर्माणि। तत्र भौमो मन्देन संस्कार्यः। तच्छीघ्रपरिधिश्च। शुक्रस्य परिधिद्वयमपि। तत्र भौमजीवसौराणामर्कः शीघ्रः स्वयं मध्यमाः।

बुधशुक्रयोरर्को मध्यमः स्वयं शीघ्रौ । शीघ्रो ग्रहोनः केन्द्रग्रहश्च मन्दोनः । भौमशीघ्रकेन्द्रपद-भुक्ताभुक्तयोरल्पस्य जीवां चतुर्भिः शतैर्गुणितां द्वादश्या जीवया विभजेत् लब्धेन केन्द्रे मकरा-दिगे भौममन्दं युतं कार्यं कर्कटादिगे चोन-मिति । शुक्रमन्दकेन्द्रज्या सार्धराशिज्या हृता लब्धेन तन्मन्दपरिधिरूनः स्पष्टो भवति । तथैव शीघ्रकेन्द्रज्यां व्यासार्धपञ्चदशांशेन विभजेल्ल-ब्धेन युतः शुक्रकेन्द्रपरिधिः स्पष्टो भवति । मन्दकेन्द्रात् जीवा भुजज्या। त्रिराशिरहितात् को-टिज्या। कोटिभुजज्ये स्वमन्दपरिधिहते खरसा-ग्निभिर्विभजेत् लब्धे भुजकोटिफले । मकरा-दिकेन्द्र कोटिफलं व्यासार्धे दद्यात् कुलीरादिकेन्द्रे शोधयेत् कोटिर्भवति । भुजो भुजफलम्। कोटि-भुजवर्गयोगमूलं कर्णः । व्यासार्धहतां भुजज्यां स्फुटकर्णेन विभजेत् लब्धस्य चापं फलकलाः । मेषादिकेन्द्रे ग्रहे शोध्यास्तुलादिकेन्द्रे देयाः। भौमस्य प्रथमे मन्दकर्मण्यर्धीकृताः । एवं मन्दस्फुटं ग्रहं शीघ्रोच्चादपास्य केन्द्रं कृत्वा एतदेव शीघ्रपरि-धिना कर्म कुर्यात् । तत्फलं मन्दस्फुटे ग्रहे मेषादिकेन्द्रे धनं तुलादौ ऋणं भौमस्य प्रथमे

शीघ्रकर्मण्यर्धीकृतम् । एवं स्फुटग्रहो भवति । तस्मात् पुनरपि केन्द्रं कृत्वा मध्यमेव ग्रहं भूयोभूयः संस्कुर्यात् यावदविशेषः स्फुटग्रहो भवति । बुधसितपातौ विपरीतेन मन्दफलेन स्फुटौ कार्यौ । भौमजीवसौराणां शीघ्रान्त्यफलेनानुलोमेन । अतीतवर्त्तमानस्फुटग्रहान्तरं स्फुटभुक्तिः । अर्कफलं स्फुटभुक्तिहतं भवनकलाभिर्लब्धं कर्म केन्द्रवशेन ग्रहे धनर्णं योज्यम् । अन्त्यशीघ्रकर्मविशेषकेन्द्रस्य वक्रादिकेन्द्रस्य चान्तरस्फुटभुक्तिशीघ्रभुक्त्यन्तरेण विभजेत् । लब्धो वक्रादेर्दिनादिः कालो ध्रुवककेन्द्रेऽधिके एष्यः शीघ्रकेन्द्रेऽधिकेऽतीतः ।

इति विष्णुधर्मोत्तरे ज्योतिःशास्त्रे ग्रहगतिसाधनाध्यायः ।

स्फुटग्रहं लिप्तीकृतमष्टभिः शतैर्भजेल्लब्धं ग्रहेण भुक्तानि अश्विन्यादिनक्षत्राणि । शेषं स्फुटभुक्त्या विभजेल्लब्धदिनादिकालो नक्षत्रप्रवेशात् । अवशिष्टमष्टशतेभ्यः संशोध्यावशेषात् प्राग्वत्कालो नक्षत्रस्थिते राशौ भुक्तांशादभुक्तांशाद्वा स्फुटभुक्त्या विभजेल्लब्धं दिनादिः संक्रान्तेर्गतैष्यः कालः ।

अथ योजनकर्णार्धं ग्रहप्रमाणविष्कम्भयोजनानि व्यासार्धहतानि स्फुटयोजनकर्णार्धेन विभजेल्लब्धं स्फुटग्रहप्रमाणव्यासकलाः । स्फुटार्ककर्णार्धं यो-

जनानि पञ्चसहस्रिकपरिधिकर्णोनोनानि तेनैव गुणितानि रविव्यासेन तदूनेन विभजेल्लब्धं भूच्छाया । स्फुटशशिकर्णार्धेन पञ्चसहस्रिकस्वपरिधेः कर्णाहतं भूछायया विभजेल्लब्धं व्यासार्धगुणं स्फुटचन्द्रकर्णार्धेन विभजेल्लब्धं राहुमानकलाः । ग्रहमानस्यार्धकलाः षष्टिगुणा भुक्त्या विभजेल्लब्धं संक्रान्तिकालात् प्रागपरेण पुण्यकालः । अर्कोनचन्द्राल्लिप्तीकृताद्व्योमयमसप्तभक्तात् शुक्लप्रतिपदादिगता तिथिः । शेषात् षष्टिगुणाद् भुक्त्यन्तरहृताद्घटिकादिः कालः । कृष्णचतुर्दश्यन्तार्धे सदैव शकुनिः । अमापूर्वार्धे चतुष्पदम् । द्वितीये नागः । प्रतिपदाद्यर्धं किंस्तुघ्नः । अर्कोनचन्द्रलिप्ताः खरसाग्निभिर्भजेदवशेषा तिथिवत् कालः लब्धादेकोनात् सप्तहृतादवशेषं ववात् करणम् । चन्द्रार्कयोगे लिप्तीकृतेऽष्टशतभाजिते लब्धं विष्कुम्भादिगतयोगाः । अवशेषाद्भुक्तियोगेन तिथिवद् गतगम्यकालस्तेन चन्द्रार्कयोः क्रान्तिसाम्यम् । तत्र व्यतीपातो भिन्नायने गोलैक्ये । वैधृतिः समायने गोलभेदे च । ध्रुवौ चन्द्रार्कयोगान्तरे चन्द्रार्कयोगाधिक्येऽधिकाविति(१) ततोऽर्कात् क्रान्ति-

(१) परम्परातो ग्रन्थाशुद्धितोऽभिप्रायोऽस्पष्ट इति ।

तात्कालिकपातेन चन्द्रात् स्फुटक्रान्तिः । प्रथमतृतीयपदान्तस्थे चन्द्रे चन्द्रस्पष्टा क्रान्तिर्यदोना भवति तदा क्रान्तिसाम्याभावः । प्रथमतृतीयपदस्थे चन्द्रमसि तदपक्रमसाम्ये गतैष्यः क्रान्तिसाम्यकालोऽन्यथाऽतीतः । द्वितीयचतुर्थपदस्थेऽन्यथा । विक्षेपेण स्वक्रान्तिदिगुत्पत्तौ चन्द्रापक्रममधिकोनं कल्पयेत् । क्रान्त्योर्युतिरन्यदिशोरेकदिशोरन्तरं व्यतीपातेऽन्यथा वैधृते प्रथमाख्यः । एवमिष्टकालिकैरर्कचन्द्रपातैर्द्वितीयाख्यस्ततः प्रथमद्वितीयकालयोर्द्वयोरेष्योऽतीतो वा पातस्तयोरन्तरमन्यथा योगोऽयं हारः । प्रथमगुणस्येष्टकालस्य तेन कालेनासकृद्द्वितीयं कृत्वा विशेषकर्मणा स्फुटः कालः साध्यः स व्यतीपातमध्यकालः । आदित्यचन्द्रमानयोगः षष्टिगुणो भुक्त्यन्तरेण हृतो लब्धा स्थितिरिति ।

इति विष्णुधर्मोत्तरे ज्योतिःशास्त्रे तिथिनक्षत्रप्रकरणं नामाध्यायः ।

दिनगतशेषाल्पकालस्योत्तरगोले चरार्धहीनस्य दक्षिणे युतस्य जीवाऽहोरात्रव्यासार्धहता त्रिज्या हृता गोलविपर्यये त्रिज्या(१)युतोनश्छेदः । छेदोऽत्र लम्बकज्याहतस्त्रिज्याविभाजितः शङ्कुः । शङ्कुवर्गहीनस्य त्रिज्यावर्गस्य पदं दृग्ज्या द्वादशहता शङ्कु-

(१) त्रिज्येत्यत्राहोरात्रव्यासार्धेन भवितव्यम् ।

हृता इष्टमाध्याह्निकार्कक्रान्त्यक्षसंयोगवियोगशेषं दक्षि-णोत्तरगोलयोरनष्टं तद्राशित्रयादपास्य तज्ज्या भाग-हारः। द्वादशाहताया अनष्टजीवाया लब्धं माध्याह्निकी छाया। त्रिज्यार्कघातो मध्याह्नछायाभागापहारविभक्त-स्तत्कर्णः। विषुवत्कर्णाहतां त्रिज्यां स्वेष्टच्छायाकर्णेन विभजेत् लब्धमुत्तरदक्षिणगोलयोः क्षितिज्यायुतोनं व्या-साधिताडितं स्वाहोरात्रार्धेन विभजेत् लब्धचापं गोल-विपर्ययाच्चरदलयुतोनं दिवसस्य गतं शेषं वा भवति।

इति विष्णुधर्मोत्तरे ज्योतिःशास्त्रे छायाप्रकरणम्।

इष्टकालस्फुटार्कराशिभुक्तलिप्तास्तदन्तराश्युदयप्रा-णहताग्रहलिप्ताभिर्विभजेत् लब्धमर्काक्रान्तराशेर्भुक्त-कालस्तदेष्टकालप्राणेभ्योऽपास्यावशेषाद्भुक्तराश्युदयप्रा-णा अपास्याः भोग्यकालेनानन्तरराश्युदया अपास्याः। अर्कराश्युदयो देयः। त्रिंशद्गुणितशेषादशुद्धराश्युद-याप्तभागाद्यम्। एवं राशिगतकाललग्नोदयाः षड्रा-शियुतार्काकभुक्तगताद्याः काले लग्नाश्च। लग्नाद्भुक्तक-लाभ्यः कालयोगे तदन्तरराश्युदये युते लग्नोदयकालः।

इति लग्नप्रकरणं नामाध्यायः।

भौमजीवसौरा मन्दाः। शीघ्रौ बुधसितौ वक्रे मन्दौ अन्यथा शीघ्रौ। मन्दग्रहाः कातरगाः। काल-हस्वादह्वस्वांशेन यदा तदा पूर्वापरोदयस्तस्य भावी

ऽन्यथा वृत्तः। तद्वत् शीघ्रस्य पश्चार्धे विपर्ययात् तस्यैव प्राक्पूर्वार्धोदयास्तमयकोदयिको ग्रहः पश्चार्धे तदाऽस्तमयिकः। तात्कालिकस्फुटविक्षेपमक्षज्याहतं व्यासार्धेन विभजेत् लब्धं ग्रहे औदयिके ऋणमस्तमयिके धनम्। उत्तरविक्षेपं परमापक्रमेण विभजेल्लब्धमयनविक्षेपेभ्यः शोध्यमन्यथा देयम्। एवं ग्रहोदयास्तलग्ने भवतः। ततो ग्रहान्तराल्लग्नवत् कालः। कालांशग्रहान्तरांशानां भुक्त्यन्तरेण भागमपहरेत्। ग्रहे वक्रिणि भुक्तियोगेन लब्धं दिनादि फलमुदयास्तमयस्य। एवं नक्षत्राणां तेषां द्वादश दृश्यादृश्यांशाः। अगस्त्यध्रुवके दृक्कर्मद्वयं कृत्वा तद्घटिकाद्वयेन राश्युदयं वर्धयेत्। तादृशोऽर्कोऽगस्त्योदयः। चक्रोनोऽस्तमयः। प्रतिदैवसिकमिष्टकाल उदयो ग्रहाक्रान्तलग्नवशेनेति।

इति विष्णुधर्मे उदयास्तप्रकरणं नाम।

स्वोदयास्तविलग्ने चन्द्रार्कयोः कार्ये। ततश्चन्द्रोदयास्तौ साध्यौ। इष्टकालिकचन्द्रार्कस्य क्रान्तिं त्रिज्यागुणां लम्बज्यया विभजेत्। लब्धे अग्रे क्रान्तिदिग्वशेन। ततोऽर्कचन्द्रशङ्कू कार्यौ। पृथक् शङ्कुहतामक्षज्यां लम्बकेन विभजेत् लब्धे शङ्कुतले ते चोत्तरे। स्वरात्रौ दिवसे याम्ये द्वादशङ्कुतलयोर्दिगैक्ये योगो दिग्भेदे वियोगः। पृथक् बाहुः। तयो-

दिगैक्ये वियोगोऽन्यथा योगः स्फुटबाहुः । स्वदृग्ज्यावर्गभुजज्यावर्गविश्लेषपदयोगः कपालभेदे ऐक्ये वियोगः । प्रथमांशज्या । दिगैक्ये विश्लेषो दिग्भेदे युतिः । द्वितीयाप्रथमावर्गयोगपदं कोटिः । कोटिबाहुवर्गयोगमूलं कर्णः । अर्कोनाच्चन्द्रात् केन्द्रम् । तस्मात् ज्या केन्द्रमानघ्नी नवत्या हृता सितं केन्द्रे चतुर्थप्रथमपदस्थे । द्वितीयतृतीयपदस्थे कृष्णम् । इन्दुमानचतुर्भागहतं सितेन्दुमानदलावलब्धेन पृथग्युतं सूत्रं स्वदिनात् गतशेषाल्पकालेन मिश्रितस्वदिनावलब्धं छेदः । ततश्छेदविभाजितात् सितात् सितेन्दुमानभुजकोटिसूत्राण्यङ्गुलतां यान्ति पूर्वापराशाभिमुखं केन्द्राद्याद्यपदगे सितं शृङ्गं परिलिखेत् । एवं द्वितीयतृतीयगे कृष्णं बिम्बम् । चन्द्रमर्कं परिकल्प्य ततोऽर्कोद्यथा शशी तथा भुजो देयः । तदग्रात् स्वाभिमुखे ततः कोटिः । ततस्तदन्तलग्नेन पूर्वान्तं पुनस्तत् कुर्यात् यावदविशेषं लब्धोनं स्यात् । (१) इति लम्बनसंस्कृते ते तिथ्यन्ते ग्रहणमध्यमः । चन्द्रवत् कल्पितविचिभात् स्वक्रान्तितोऽत्वेऽधिके सौम्याऽन्यथा याम्याऽवनतिः । तात्कालिकचन्द्रविक्षेपावनत्योर्दिगैक्ये योगो दिग्भेदे वियोगः स्फुटविक्षेपः । तेन स्थितिमर्दे भदलो-

(१) अत्र कश्चिदंशो निपतितः ।

नयुतैर्ग्रहैः स्पर्शनिमीलनमोक्षकालिकैर्लम्बनानि कार्याणि । मध्यलम्बनस्य च दिगैक्येऽन्तरं भेदे योगः फलम् । तेन मध्यमास्यत्यन्तरविचन्द्राविव युतौ स्वकालिकौ स्फुटौ भवतः । लम्बनेन हीने स्थितिविमर्दार्धे कार्ये । शेषपरिलेखादि चन्द्रग्रहणवद्भवति चात्र ।

धन्यं यशस्यमायुष्यं स्वर्गलोकप्रदं तथा ।
इदं ग्रहाणां गणितं सर्वकामप्रदं शिवम् ॥
गतिमेकस्य विज्ञाय ग्रहस्य सुसमाहितः ।
तस्य लोकमवाप्नोति नात्र कार्या विचारणा ॥
सर्वग्रहगतिं ज्ञात्वा ब्रह्मलोकं प्रपद्यते ।
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥
कामानवाप्नुयात् कामी मोक्षार्थी परमं पदम् ।
सम्यग् ग्रहगतिं ज्ञात्वा पात्रतां याति वै द्विजः ॥
न चेद्वृत्तिं तया कुर्यात् तया वृत्तिं विवर्जयेत् ।
पात्राणामपि तत्पात्रं ग्रहाणां वेत्ति यो गतिम् ॥
वेदा हि यज्ञार्थमभिप्रवृत्ताः
कालानुपूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं
यो ज्यौतिषं वेद स वेद सर्वम् ॥

इति श्रीविष्णुधर्मे पुष्करोपाख्याने रामपितामहसंवादे
पितामहसिद्धान्ताध्यायः ।

समाप्तोऽयं सिद्धान्तः ॥

# अथ वृद्धवसिष्ठसिद्धान्तः ।

श्रीगणेशाय नमः ।

नमस्ते चित्स्वरूपाय पराय परमात्मने ।
योगिध्येयाय शान्ताय कालरूपाय विष्णवे ॥ १ ॥
नैमिष्येऽनिमिषक्षेत्रे वामदेवो द्विजोत्तमः ।
अभिवाद्य सुखासीनं वसिष्ठं परिपृच्छति ॥ २ ॥
गुरो धर्मज्ञ शान्तात्मँस्त्रिकालज्ञ दयानिधे ।
सर्वशास्त्राण्यधीतानि त्वत्प्रसादान्मया मुने ॥ ३ ॥
तानि सर्वाणि शास्त्राणि वृथारूपाणि भान्ति मे ।
वेदनेत्रं विना तस्माज्ज्योतिःशास्त्रं प्रयच्छ मे ॥ ४ ॥

वसिष्ठ उवाच ।

साधु साधु महाभाग यन्मां त्वं परिपृच्छसि ।
विस्तरेण प्रवक्ष्यामि यथाज्ञातं पितामहात् ॥ ५ ॥
ज्योतिःशास्त्रं समग्रं प्रथमपुरुषतः स्वर्णगर्भाद्विदित्वा
पूर्वं ब्रह्मा तथोपर्यखिलमुनिगणप्रार्थनाद्यश्चकार ।
तच्चेदं सुप्रसन्नं स्फुटपदनिकरैर्गुह्यमध्यात्मरूपं
शम्बद्विम्बप्रकाशं यदुपचरितविदां निर्मलं ज्ञानचक्षुः ॥ ६ ॥

छन्दः पादौ शब्दशास्त्रं च वक्त्रं
कल्पः पाणी ज्यौतिषं लोचने च ।
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं
वेदस्याङ्गान्याहुरेतानि षड्वा ॥ ७ ॥

वेदस्य चक्षुः किल शास्त्रमेतत्
प्रधानताऽङ्गेषु ततोऽर्थजाता ।
अङ्गैर्युतोऽन्यैः परिपूर्णमूर्त्ति-
श्चक्षुर्विहीनः पुरुषो न किंचित् ॥ ८ ॥

क्रतुक्रियार्थं श्रुतयः प्रवृत्ताः
कालाश्रयास्ते क्रतवो निरुक्ताः ।
शास्त्रादमुष्मात् किल कालबोधो
वेदाङ्गमुख्यत्वमितः प्रसिद्धम् ॥ ९ ॥

अध्येतव्यं ब्राह्मणैरेव तस्मा-
ज्ज्योतिःशास्त्रं पुण्यमेतद्रहस्यम् ।
एतद्बुद्ध्वा सम्यगाप्नोति यस्मा-
दर्थं धर्मं मोक्षमग्र्यं यशश्च ॥ १० ॥

दृष्ट्वा ज्योतिश्चक्रं
खत्रयवेदाङ्गखाद्रिशशिवर्षैः १७०६४००० ।
शश्वद्भ्रमणे क्षिप्त्वा
मेषादिगता ग्रहाः कमलभुवा ॥ ११ ॥

पश्चिमदिग्गतिवायु-
प्रवहनिबद्धे भपञ्जरे शीघ्रम् ।
भ्रमति सखचरे सत्यपि
खेटा गतितः प्रयान्ति पूर्वदिशम् ॥ १२ ॥

सृष्ट्यादौ मधुशुक्लप्रतिपदि भानुर्ग्रहाश्च मेषादौ ।
मेषादिगा युगादौ खेटाश्चातोऽन्यथा च मन्दुपाताः ॥ १३ ॥

दशगुर्वक्षरोच्चारकालः प्राणोऽभिधीयते ।
तत्षट्कैश्च पलं षष्ट्या नाडीषष्ट्याऽऽर्क्षजं दिनम् ॥ १४ ॥

तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा ।
राशिसंक्रमणात् सौरो दर्शान्तश्चान्द्रमासकः ॥ १५ ॥

उदयादुदयं भानोर्भूदिनं मर्त्यलोकजम् ।
चान्द्रो मासः पितृदिनं कृष्णाष्टम्यर्धतो भवेत् ॥ १६ ॥

मकरादिराशिषट्क-
मुदगयनं कर्कटादिगं याम्यम् ।
राशिद्वयार्कभोगात्
षट् त्वृतवः शैशिरादयः क्रमशः ॥ १७ ॥

युगमानं सहस्रघ्ना
नखरामाब्धयः समाः ४३२००० ।
तद्दशांश-४३२००० श्चतुर्धा च
चतुस्त्रिद्व्येकसंगुणः ॥ १८ ॥

क्रमात् कृतयुगादीनां
धर्मपादव्यवस्थया ।
खचतुष्कयमाद्र्यग्नि
खाम्नयो ३०६७२०००० मनुसंमितिः ॥ १९ ॥

कृतप्रमाणस्तस्यान्ते सन्धिः प्रोक्तो जलप्लवः ।
ससन्धिमनवः कल्पे चतुर्दश भवन्ति हि ॥ २० ॥

तद्वद्दिनं ब्रह्मणः प्रोक्तं
रात्रिरेतावती तथा ४३२००००००० ।
परमायुः शतं तस्य
तयाऽहोरात्रसंख्यया ३११०४०००००००००० ॥ २१ ॥

तस्यार्धमायुर्गतमत्र कल्पे
षट्कं मनूनां त्रिघनो युगानाम् ।
युगादिपादाश्च १७१८०० सहस्त्रनिघ्ना
युगाष्टसूर्याः१२८४०००सहिताः समाः स्युः ॥२२॥

खत्रयाष्टरसखाब्धिसप्तगो
भूमयो-१९७२०६८०००ऽब्दनिचयाः स्वकल्पतः।
खत्रयाब्धिरसखाद्रिभू-१७०६४०००
निताऽस्तेऽग्रतो गतयुताः स्वसृष्टितः ॥ २३ ॥

युगे भानुज्ञशुक्राणां
भगणा युगसंमिताः ४३२०००० ।

जीवार्किकुजशीघ्राणां
त एव ४३२०००० प्राचि यायिनाम् ॥ २४ ॥
इन्दोस्तकोमरव्यच-
सप्तसप्तशरास्तथा ५७७५३३३६ ।
कुजस्य यमरामाष्ट-
रसनन्दयमाश्विनः २२९६८३२ ॥ २५ ॥
बुधशीघ्रस्य पूर्णाङ्ग-
खाद्रिरामाङ्कतोयदाः १७९३७०६० ।
बृहस्पतेर्वियद्बाङ्ग-
यमवेदाङ्गवह्नयः ३६४२२० ॥ २६ ॥
शुक्रशीघ्रस्य तर्काद्रि-
रामदोर्भुजखाद्रयः ७०२२३७६ ।
शनैश्चरस्य नागाङ्ग-
शरतर्कयुगेन्दवः १४६५६८ ॥ २७ ॥
शशाङ्कोच्चस्य रामाभ्र-
यमसर्पाष्टसागराः ४८८२०३ ।
चन्द्रपातस्य नागाग्नि-
यमबाहुगुणाश्विनः २३२२३८ ॥ २८ ॥
उदयादुदयं भानो-
र्भूमिसावनवासराः ।

१

सर्पाश्विनागमेघाङ्क-
सप्तसप्ताक्षभूमयः १५७७९१७८२८ ॥ २९ ॥
भानामष्टाश्विनागाद्रि
त्रिदोर्दोर्गजवासराः १५८२२३७८२८।
चान्द्राहाः खाष्टखाभ्राभ्र
खाग्निखाङ्कनिशाकराः १६०३०००८० ॥ ३० ॥
रविमासाः खखव्योम-
खाब्धिसर्पैकसायकाः ५१८४०००० ।
चान्द्रमासा रसाग्न्यग्नि
त्रित्रिवेदाग्निसायकाः ५३४३३३३६ ॥ ३१ ॥
अवमाहा यमाक्षाश्वि-
द्विनागाभ्रशराश्विनः २५०८२२५२ ।
अधिमासाश्च तर्काग्नि-
सुरनन्दाक्षभूमयः १५९३३३६ ॥ ३२ ॥
द्विगोऽब्ध्यब्ध्यष्टवेदाब्धि-
द्विदिनान्युदया विधोः १५२४४८४४९२ ।
कुजोदया रसाङ्काङ्क-
खाब्धिगोगोद्रिवासराः १५७९९४०९९६ ॥३३॥
ज्ञ चलस्याष्टषड्गोगो-
गोऽश्विवेदाङ्गवासराः १५६४२९९९६८ ।

गुरूदया गजाभ्राङ्का-
ग्न्यद्र्यष्टैकाष्टवासराः१५८१८७३६०८ ॥३४॥
द्वयक्ष्याब्ध्यक्षैकदोर्बाणा-
द्रिदिनानि सितद्रुतेः १५७५२१५४५२ ।
मन्दोदयाः खषड्भानु-
गोनखाष्टदिनानि च १५८२०९१२६० ॥३५॥
घनाङ्गगोऽब्धिमेघाष्ट-
दिनानीन्दुक्ष्मदूदयाः १५८१७४९६१७ ।
पातोदया युगाङ्काक्षा-
क्षाभ्रखाश्व्यष्टवासराः १५८२००५५९४॥३६॥
भोदयाः स्वोदयैरूना
भगणा वा भवन्ति ते ।
भोदयाः १५८२२३७८२८स्वोदयैर्भक्ताः
स्वाहोरात्रं दिनादिकम् ॥ ३७ ॥
नक्षत्राणामहोरात्रं
घटीषष्टिमितं सदा ।
भगणा भूदिनै-१५७७९१७८२८र्भक्ताः
प्राग्गतिः प्रत्यहं भवेत् ॥ ३८ ॥
अर्कोनचन्द्रभगणा-
श्चान्द्रमासा ५३४३३३६ भवन्तिवा वा ।

दिनोद्धृताः खतिथयो
भूदिनोनास्तिथिच्चयाः २५०८२१५२ ॥ ३९ ॥
चन्द्रार्कमासविवराद्धिमासा भवन्ति वा १५९३३६ ।
एते सहस्रगुणिताः कल्पे स्युर्भगणादिकाः ॥ ४० ॥
सप्ताष्टरामा ३८७ युगपूर्णबाहवः २०४
कल्पे गजाङ्काग्नि-३९८ मिताः खखाङ्काः ९०० ।
अग्निबाणा ५३५ नववह्नः ३९ क्रमात्
सूर्यादिकाः प्राग्गतिमन्दपर्ययाः ॥ ४१ ॥
भौमादिकानामथ पातपर्ययाः
कल्पे प्रकल्प्यास्तु विलोमगामिनः ।
अक्राश्विनो-२१४ऽष्टाष्टयुगाब्धि४८८वारिधि-
क्ष्माभृद्भुवो-१७४ऽग्न्यभ्रनवा ९०३ऽश्विषड्रसाः ६६२॥
विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ।
तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ॥ ४३ ॥
सृष्टितोऽब्दनिचयः समाहतो
भास्करै-१२र्मधुसितादिमासकैः ।
संयुतो द्विरधिमास-१५९३३३६संगुणः
सूर्यमास-५१८४०००० विहृताप्तसंयुतः ॥ ४४ ॥
ते खराम-३०गुणिता दिनान्विता
द्विस्तिथिच्चय-२५०८२२५२ हृता विभाजिताः ।

चान्द्रवासरगणै-१६०३००००८०स्तिथिक्षयाः
सावनो दिनगणस्तदूनितः ॥ ४५ ॥
वाऽर्कघ्नो १२ऽब्दश्चतुर्धा
यमलगुणशरक्ष्मा-१५३२विभक्ताप्तहीनः
खाद्र्या ७०प्तया युक् सुरा ३३प्तैः
सहित इति भवेच्चान्द्रमासव्रजो वा ।
त्रिंशद् ३०घ्नो द्विः शिव-११घ्नो
द्विरवनिपयमाङ्काङ्क९९२ १६भागादिहीनो
हीनो लब्धावमाहैर्-
गुणखनग-७०३हृतात् सावनोऽहर्गणः स्यात् ॥ ४६ ॥
सृष्टेर्गतादिमासाः
कुगजाद्र्यङ्कार्थखैकनेत्राश्वाः ७२१०५९७८१ ।
संप्रत्यवमाः खनगाब्ध्यग्नि-
खगोऽभ्रार्थवह्निशशिचन्द्राः ११३५०९०३४७० ॥ ४७ ॥
खरसनवाङ्कयमाग्नि-
द्विगजखवेदैकपर्वता द्युगणाः ७१४०८२३२९९६० ।
द्वादशदशशतवर्षैः १२०००
शेषे त्रेतायुगेऽत्र संजातः ॥ ४८ ॥
द्युगणो निजगणहतो भूदिनभक्तो ग्रहस्य भगणादिः ।
एवं मृदुचलपाता भवन्ति ते वेष्टसंयुगद्युगणात् ॥ ४९ ॥
माससमादिन-३० । ३६० भक्ताद्-

द्युगणाल्लवं पृथगूयम२गुण३घ्नम् ।
सैकं१ द्युसदा ७ भक्तं
मासममाधीश्वरावकात् ॥ ५० ॥
खचराश्च मध्यभुक्त्या
लङ्कायामार्धरात्रकालीनाः ।
देशान्तरेण हीना
निजदेशीया भवन्ति सहिता वा ॥ ५१ ॥
षोडशशत-१६०० योजनको
भूकर्णो दिग्घ्नवर्गतो मूलम् ५०६० ।
परिधिर्निरक्षदेशे
लम्बगुणघ्नस्त्रिभज्यया हृतः स्पष्टः ॥ ५२ ॥
वृत्तद्वयाङ्किता भू-
र्लङ्कायमकोटिसिद्धरोमाख्याः ।
पुर्यश्चतस्र एताः
प्रागपरे व्यक्षसंज्ञके वृत्ते ॥ ५३ ॥
वृत्ते च सौम्ययाम्ये लङ्का
काञ्ची कुमध्यरेखाख्ये ।
सगरश्च वत्सगुल्मो-
ज्जयनिकुरुक्षेत्रमेरुसंस्थानाः ॥ ५४ ॥
तद्देशान्तरयोजन-
गुणिता गतयः स्वकीयपरिधिहृताः ।

लब्धकलादिस्वमृणं
खचरे परपूर्वके च रेखातः ॥ ५५ ॥
गणितागतादनन्तर-
मिन्दोरुन्मीलनं तदा प्राच्याम् ।
स्यात् स्वकीयमेव
पश्चादथ वा कुमध्यतश्चादौ ॥ ५६ ॥
दृग्गणितागतनाडी-
विवरेण हतं स्फुटं भुवः परिधिम् ।
षष्ट्या ६० विभजेल्लब्धो
योजनसंघोऽथ वा निमीलनतः ॥ ५७ ॥
गुरुगतराशिसमूहात्
षष्टिहताच्छेषकेण विजयाद्याः ।
तद्भागा यमरगुणिताः
पञ्चविभक्ताप्तभुक्तमासादि ॥ ५८ ॥
प्रभाकरस्योद्गमनात् पुरे स्याद्-
वारप्रवृत्तिर्दशकन्धरस्य ।
चरार्धदेशान्तरनाडीकाभि-
रूर्ध्वं तथाऽधोऽप्यपरञ्च तस्मात् ॥ ५९ ॥
वारप्रवृत्तेर्घटिका दिनेशात्
कालाख्यहोरापतयः क्रमेण ।
सार्धेन नाडीद्वितयेन षष्ठः

षष्ठश्च षष्ठश्च पुनः पुनश्च ॥ ६० ॥
चैत्रादिमासेन यथाक्रमेण
मेषादयो द्वादशराशयः स्युः ।
शून्याधिमासेषु समागतेषु
चलन्ति तेभ्यो नियतं विनाऽपि ॥ ६१ ॥
सर्वेषु मासेष्वधिमासकः स्यात्
तुलादिषट्केऽपि च शून्यमासः ।
संसर्पकः पूर्वभवोऽधिमासः
पश्चाद्भवोंऽहस्पतिनामधेयः ॥ ६२ ॥
पर्वद्वयं संक्रमयोर्यदि स्यात्
पर्वान्तरे संक्रमणद्वयं च ।
संसर्पकांहस्पतिनामधेयौ
मध्यार्कगत्या त्वधिमास उक्तः ॥ ६३ ॥
यस्मिन् दर्शे स्यान्ता-
दर्वागेकापरापरं दर्शम् ।
उल्लङ्घ्य भवति भानोः
संक्रान्तिः सोऽधिमासः स्यात् ॥ ६४ ॥
द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।
घटिकानां च चतुष्केण निपतत्यधिमासकः ॥ ६५ ॥
आद्यन्तदर्शयोर्मध्ये यस्मिन् मासेऽथ वा यदि ।
संक्रान्तिद्वितयं स्यात् तु क्षयमासः स उच्यते ॥ ६६ ॥

रविमानकलाः षष्ट्या गुणिता भुक्तिभाजिताः ।
तदर्धनाड्यः संक्रान्तेरर्वाक् पुण्यं तथाऽपरे ॥ ६७ ॥
चलसंस्कृततिग्मांशोः संक्रमो यः स संक्रमः ।
अजागलस्तनमिव राशिसंक्रान्तिरुच्यते ॥ ६८ ॥
पुण्यदां राशिसंक्रान्तिं केचिदाहुर्मनीषिणः ।
एतन्मम मतं न स्यान्न स्पृशेत् क्रान्तिकच्यया ॥ ६९ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे मध्यमाधिकारः प्रथमः ॥

वामदेव उवाच ॥

भगवन्मृदुचलपाताः
किंरूपाः किं प्रयोजनं तेषाम् ।
दृक्तुल्यतां तु याताः
कथमिह खचरा भवन्ति संस्पष्टाः ॥ १ ॥

वसिष्ठब्रह्मर्षिरुवाच ।

अदृश्यरूपाः किल कालमूर्तयो
भचारिणो मन्दचलोच्चराहवः ।
तद्वातनद्धाः खचराः स्वदिङ्मुखं
कर्षन्ति ते प्रागपरं यमोत्तरम् ॥ २ ॥
खचरात् प्राक्पश्चार्धे
कर्षति खचरं मृदुश्चलः प्राच्याम् ।

अपरार्धस्थो यदि वा
कर्षति खचरं च पश्चिमाभिमुखम् ॥ ३ ॥
एवमुदग्दक्षिणयोः
पाताः क्रान्त्यन्ततः स्वविक्षेपैः ।
तस्मिन्नेव भवलये
क्षिपन्ति खचरान् सुधाकरप्रमुखान् ॥ ४ ॥
खेटाद्यथा प्राग्भगणार्धसंस्थः
खेटं च याम्ये क्षिपतीह राहुः ।
सौम्येऽपमान्तादपरार्धसंस्थो
ज्ञशुक्रयोः शीघ्रत एव पातः ॥ ५ ॥

गतिहेतवस्तु तस्मा-
च्चलमन्दोच्चाः खचारिणां गतयः ।
वक्राद्या अष्टविधा
जायन्ते पञ्चधा ऋज्वी ॥ ६ ॥
त्रिघन-२७ नवा-९० र्क१२० रसा-६० र्का१२०
सूर्या १२० दिग्घ्ना भवन्ति परमकलाः ।
क्षेपानामपमान्ता-
द्यामोत्तरतः शशाङ्कपूर्वाणाम् ॥ ७ ॥
परमापमगुणलिप्ता
बाणखवेदा-४०५ स्त्र तद्गुणज्या च ।

परमज्यया१०००ऽऽप्तचापं
क्रान्तिलवास्ते तु गोलतो दिक् स्यात् ॥ ८ ॥
युगाद्रिचन्द्रा १७४ यमवेदरामा ३४२
वियन्नभोऽग्ना ५०० गुणवेदतर्काः ६४३ ।
तर्काङ्कसप्ता-७९६ष्टरसाष्ट-८६८ संख्याः
खवेदनन्दाः ९४०शरसर्पनन्दाः ९८५ ॥ ९ ॥
सहस्रमेकं क्रममौर्विकाया
अथोत्क्रमज्याशकलानि वच्मि ।
दिनानि १५ षष्टि-६० र्युगरामचन्द्रा १३४
वेदाग्नियुग्मं२३४नगपञ्चरामाः३५७ ॥ १० ॥
खखेषवो-५००ऽष्टाब्धषड६५८ङ्कदोर्गजाः८२९
खखाभ्रचन्द्रा१०००० इति दिग्विभाजिताः ।
स्यातां भुजांशादथ कोटिभागतः
क्रमोत्क्रमाख्ये भुजकोटिमौर्विके ॥ ११ ॥
विशोध्य खण्डानि च मौर्विकायां
दिग्घ्नं च शेषं त्वविशुद्धभक्तम् ।
दिग्भिर्हतैः शुद्धमितैः प्रयुक्तं
लवादिकं तद्धनुरत्र सम्यक् ॥ १२ ॥
भुजस्त्रिभोनं त्वधिकोनभार्धं
भार्धाधिकं भार्धविहीनितं च ।

नवाधिकेनोनितमर्कभेभ्यस्त्रिभं
भुजोनं भवतीह कोटिः ॥ १३ ॥
मनवो रदाश्च मान्द्रा नखसिद्धकलोनिता
रवेः शशिनः १३ । ४० । ३१ । ३६ ।
भौमादीनां खाश्वाः ७० गजदोषौ २८
निर्जराः ३३ शिवाः ११ खाचाः ५० ॥ १४ ॥
भौमादिशीघ्रपरिधे-
र्भागाश्चयंशोनिताश्च युगसिद्धाः २४३ । ४० ।
यमत्रिश्चे १३२ गजतर्का ६८
नवशरयमलाः २५९ शराग्नयः ३५ क्रमतः ॥ १५ ॥
शुक्रभुजज्या द्विगुणा त्रिगुण-१००००
विभक्तोनितः परिधिमान्दः ।
शर-५ गुणिता त्रिगुणा-१००००प्ता
चलपरिधिस्तद्युतः स्फुटस्तस्य ॥ १६ ॥
भुजकोट्योरल्पांश-
ज्या चलकेन्द्रे कुजस्य खरवि-१२० हृता ।
लब्धेन शीघ्रपरीधौ
रसदिग्-१०६ विहृतायनान्स्वदः स्वर्णाः ॥ १७ ॥
खेटोने मृदुशीघ्रे
मृदुचलकेन्द्रे च गोलतः स्वर्णम् ।

मृदुचलफलं च खचरे

सौम्यो मेषात् तुलाधराद्याम्यः ॥ १८ ॥

मन्दकेन्द्रोद्भवा दोर्ज्या परिध्यंशैर्गुणा हृता।

चक्रांशैस्तद्धनुः स्वर्णं ग्रहे मन्दस्फुटो भवेत् ॥ १९ ॥

मन्दोनशीघ्रतो दोर्ज्या

कोटिज्याऽथ त्रिभज्यका १०००।

स्वपरिध्यंशगुणिता

चक्रांश-३६० विहृता फलम् ॥ २० ॥

तेन योगान्तरा पूर्वमानीता कोटिमौर्विका।

केन्द्रे मृगकुलीरादौ तद्दोर्ज्यावर्गयोगतः ॥ २१ ॥

मूलं कर्णः परिधिना-

हता दोर्ज्या खषड्गुणैः ३६०।

लब्धत्रिज्या-१००० हृतं

कर्णभक्तं चापं तु शीघ्रजम् ॥ २२ ॥

कर्मणैकेन मान्देन स्पष्टो भानुस्तथा शशी।

भौमादयः स्फुटाः खेटाश्चतुर्भिः कर्मभिः स्मृताः ॥ २३ ॥

मध्ये शीघ्रफलस्यार्धं मान्दं तस्मिन् फलस्य च।

मध्ये मान्दफलं कृत्स्नं शीघ्रं चैवासकृत् स्फुटः ॥ २४ ॥

तद्भुक्तिर्ग्रहवत् कार्या भुक्तिर्दोर्ज्यान्तराहता।

युगमेघ-१७४ विभक्ताप्तैः स्वमन्दपरिधिर्हतः ॥ २५ ॥

चक्रांशाहृत् कलादि स्यात् तत् फलं मध्यभुक्तिषु।

केन्द्रे तु कर्कनक्रादौ धनर्णं मन्दसंस्फुटम् ॥ २६ ॥
तदूना स्वचलोच्चस्य भुक्तिस्त्रिज्यान्त्यकर्णयोः ।
विवरेण हता भाज्या चलकर्णेन लिप्तिका ॥ २७ ॥
कर्णे त्रिज्याधिकोने तु स्वर्णं मन्दगतौ स्फुटा ।
ऊने मन्दाधिका लिप्ता वामं पात्या च वक्रगा ॥ २८ ॥
दूरस्थितः स्वशीघ्रोच्चाद्ग्रहः शिथिलरश्मिभिः ।
सव्येतराकृष्टतनुर्भवेद्वक्रगतिस्तदा ॥ २९ ॥
वेदभूपै-१६४र्वेदशक्रैः १४४-
खविश्वै-१३०र्गुणभूमिपैः १६३ ।
बाणरुद्रैः ११५ स्थिरान्त्या-
शुकेन्द्रांशैर्भूसुतादयः ॥ ३० ॥
भवन्ति वक्रिणस्तेऽशै-
स्वक्राच्छुद्धैस्तु मार्गिणः ।
वक्राह्वा द्विखराः ७२ सिद्धा२४
द्वीशा१६२ऽष्टाब्धि४८सुरेन्दवः १३३ ॥ ३१ ॥
रविमन्दफलं निघ्नं स्वस्वगत्या विभाजितम् ।
चक्रांशैः कलिका स्वर्णं कार्यं मध्येऽर्कवद्ग्रहे ॥ ३२ ॥
चक्राद्विशुद्धपातानां कुजार्किगुरुशीघ्रजम् ।
ज्ञभृग्वोः पातयोर्मान्दे वामं पातोनखेचरात् ॥ ३३ ॥
ज्ञभृग्वोः शीघ्रतो दोर्ज्या स्वस्वविक्षेपसंगुणा ।
स्वस्वस्थिरान्त्यकर्णाप्ता विक्षेपस्त्रिज्यया विधोः ॥३४ ॥

क्रान्तिस्तत्संस्कृता चन्द्रादीनां भानोर्यथागता ।
नक्षत्राणामपि क्रान्तिः स्पष्टा स्यात् क्षेपसंस्कृता ॥ ३५ ॥

अथायनांशानयनम् ।

अष्टादशशत-१८००शिष्टे
ऽब्दे भ-२७विनिघ्ने विभाजिते विषमे ।
भुक्ते युग्मे गम्ये
खखगजचन्द्रै-१८००श्चलांशकाः स्वर्णाः ॥ ३६ ॥

छायागणितागतयोर्भानोर्विवरं चलांशकास्ते वा ।
छायार्कोद्गणितार्को हीनः पूर्वोऽन्यथा पश्चात् ॥ ३७ ॥
खचराश्चलन्ति तस्मात् पूर्वे युक्ताश्च पश्चिमे हीनाः ।
तस्मादपमच्छायाचरदलनाड्यादिकं साध्यम् ॥ ३८ ॥

अजतुलालिगतस्य रवेर्दिने
द्युदलभाऽर्क-१२मिताङ्गुलशङ्कुना ।
पलविभा पलभा च खमध्यतो
नतिसमुन्नतिजाः पललम्बकाः ॥ ३९ ॥

खचरोदयासुनिघ्नी
भुक्तिर्विहृता खखाष्टशशि-१८००भिस्तत् ।
चक्रकलासु-२१६००युते ते
स्वाहोरात्रासवो द्युसदाम् ॥ ४० ॥

क्रान्तेरुत्क्रममौर्व्विकोन-
परमज्या१०००कर्णखण्डो भवेत् ।

क्रान्तिज्या विषुवत्प्रभाविनिहता
कुज्याऽर्क१२भक्ता तया ।
त्रिज्या१०००संगुणिता हृता
दिनदलव्यासेन तत्कार्मुकं
प्राणाः षष्टिहृतादिनासुचर-
णा-५४०० स्वर्णक्रमाद्गोलयोः ॥ ४१ ॥
तद्वद्धिघ्नं दिनमानं
वामं रात्रिर्जवाहृतप्राणात् ।
खरसगुण-३६०हृतविकला
उदये स्वर्णं ग्रहेऽस्तगे वामम् ॥ ४२ ॥
अर्कोनेन्दुकलाभ्यो
नखाद्रि-७२०लब्धा तिथिः खरसरामैः ३०६ ।
करणं रूपविहीनं
ववादिषष्टिघ्नशेषतो नाड्यः ॥ ४३ ॥
गत्यन्तरेण भक्ता इन्दुकलाःसेन्दुभानुलिप्ताभ्यः ।
खखगजलब्धभयोगा गतियोगहृतास्तयोर्नाड्यः ॥ ४४ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे
स्पष्टाधिकारो द्वितीयः ॥ २ ॥



दिक्साधनमथ वक्ष्ये ज्योतिश्चक्रं यदाश्रितं यस्मात् ।
तदनु च देशविभागं कालविरामं च यन्त्राणि ॥ १ ॥
समभूतले सुवृत्ते शङ्कोश्छाया विशति यत्र पूर्वाह्णे ।
यत्र च यात्यपराह्णे रेखा तत्रापरा पूर्वा ॥ २ ॥
पूर्वापराङ्ककेन्द्रात् तिमिना रेखा यमोत्तरा मध्यात् ।
तिमिभिर्विदिशः साध्या याम्योदग्वा ध्रुवे वेधात् ॥३॥
मध्यन्दिनगे तरणौ शङ्कोश्छाया यमोत्तरा साक्षात् ।
तन्मत्स्यतोऽपि पूर्वापरा च दिग्वाऽथ संसाध्या ॥ ४ ॥
सममण्डलोपगे वा प्रागपराभा रवौ भवति साक्षात् ।
तद्वत्कोणगतेनै कोणदिशौ स्तस्ततः प्राची ॥ ५ ॥
भुजकोटिकर्णभेदादिह गोले स्यात् सहस्रधा त्र्यस्रम् ।
ऊह्यं तद्बुद्धिमता गणितविधानप्रधानेन ॥ ६ ॥
छायाऽसौ भुजरूपा शङ्कुरसौ द्वादशाङ्गुलप्रमितः ।
कोटिस्वरूपकः स्याच्छङ्कुविभागाश्रितः कर्णः ॥ ७ ॥

भाशङ्कुमानाङ्गुलवर्गयोगा-
न्मूलं श्रुतिः स्याद्विषुवद्दिनार्धे ।
शङ्कोः श्रुतेर्वर्गवियोगमूलं
प्रभा भवेदिष्टदिनेष्टकाले ॥ ८ ॥

पलप्रभाशङ्कुहते त्रिभज्ये
भक्ते च कर्णैः पललम्बजीवे ।

चापे तयोः स्तः खलु दक्षिणौ तौ
निरक्षतश्चोत्तरभागसंस्थौ ॥ ९ ॥
स्वाक्षांशकापक्रमयोगतोऽंशा
दिशोः समत्वेऽन्तरतोऽन्यथा वा ।
खस्वस्तिकादुत्तरदिग्नतस्य
याम्येऽथ वा स्युस्तरणेश्च तेऽंशाः ॥ १० ॥
तज्ज्यात्रिज्ये तरणिगुणिते
कोटिजीवाविभक्ते
छायाकर्णौ दिनदलगते
चाक्षतो वाऽक्षभा स्यात् ।
मध्यच्छायागुणितपरम-
ज्या त्रिभक्ता स्वकर्णा-
स्तच्चापांशाः खलु यदि विभा
दक्षिणे चोत्तरे वा ॥ ११ ॥
सौम्या याम्या रविनतलवाः स्युः खमध्याद्दिनार्धे
तद्युक्ताऽपक्रमलवगुणा दिग्विभेदेऽन्तरं वा ।
तद्दिक्साम्ये खलु पललवास्तज्ज्यका वाऽक्षजीवा-
तद्वर्गोनात्त्रिगुणकृतितो लम्बजीवा हि मूलम् ॥ १२ ॥
शङ्कुमानाङ्गुलाहत्या-
ऽक्षज्या त्रिज्या च भाजिता ।

लम्बज्यया विषुवती
छायाकर्णोऽपि जायते ॥ १३ ॥
अपक्रमज्यागुणितोऽक्षकर्णो-
ऽक्षभाविभक्तः फलमुन्नतज्या ।
तच्चापमत्रोन्नतभागकाः स्युः
सहस्ररश्मौ सममण्डलस्थे ॥ १४ ॥
त्रिज्याकृतेः प्रोज्झ्य तदुन्नतज्या-
वर्गं पदं सा भवतीह दृग्ज्या ।
दृक्त्रिज्यकेऽर्काभिहते विभक्ते
छायाश्रुती चोन्नतजीवया वा ॥ १५ ॥
लम्बाक्षजीवे विषुवत्प्रभार्का-
हते विभक्तेऽयमजीवया तौ ।
लब्धौ च कर्णौ सममण्डलस्थे
भानौ ततो भा सुधिया विधेया ॥ १६ ॥
शङ्कुर्भवेदुन्नतशिञ्जिनी सा
स्वाक्षज्यया संगुणिता विभक्ता ।
क्रान्तिज्यया सा परमा भुजज्या-
चापं भुजाऽर्के सममण्डलस्थे ॥ १७ ॥
स्वक्रान्तिजीवा परमज्यकाघ्नी
लम्बज्यया ऽऽप्ताऽग्रगुणो रवेः स्यात् ।

इष्टश्रुतिघ्नस्त्रिभजीवयाऽऽप्त-
मग्रा भवेदङ्गुलपूर्विका च ॥ १८ ॥

त्रिभजीवाकृति-१०००००० दलतो-५००००००
ऽग्रज्यावर्गं विशोध्य शङ्कुकृतिम् ।
निघ्नं हृतं सदोनं
पलभाकृतिभिर्हरैः करणी ॥ १९ ॥

द्वादशगुणिता पलभा-
ऽग्रज्यागुणिता हरोद्धृताऽत्रफलम् ।
तद्वर्गयुक्तकरणी-
मूलेऽत्रफलं धनर्णं स्यात् ॥ २० ॥

उत्तरयाम्यक्रान्त्यो-
रेवं कोणस्थिते भवति शङ्कुः ।
यत्रापमांशतोऽक्षो-
ऽभ्यधिकस्तत्राग्निनिर्ऋतिकोणगतः ॥ २१ ॥

उत्तरयाम्यगतेऽर्के सदैव शङ्कुस्ततो विभाकर्णः ।
न हि तावदुत्तरस्थे शम्भुमरुत्कोणयोर्भवति शङ्कुः ॥ २२ ॥

यत्राक्षभागाः शरपक्षतुल्या
ईशानगोऽर्कः समुदेति कर्के ।
मृगस्थिते वह्निविदिग्गतो भा-
तिथ्यंशयुग्मान्वितमेषसंख्या ॥ २३ ॥

चरजासुभिर्युतोना त्रिज्या सौम्यापमे क्रमाद्याम्ये ।
अन्त्या भवति नतासुव्युत्क्रमजीवाभिरूना सा ॥ २४ ॥
दिनखण्डकर्णगुणिता छेदस्त्रिज्याविभाजिता तद्‌घ्नी ।
लम्बज्यकाऽथ भाज्या परमज्यकया ४०५ भवेच्छङ्कुः ॥
तद्वर्गोनत्रिज्यावर्गान्मूलं विधाय दोर्ज्या स्यात् ।
दृक्‌त्रिज्यके(१)ऽर्कगुणिते शङ्कुहृते भाश्रुती भवतः॥२६॥
पलकर्णहतक्रान्तेर्जीवा शङ्कुज्यया हृताऽर्काग्रा ।
इष्टश्रुतिगुणिता सा मध्यमकर्णोद्धृता स्वीया ॥ २७॥
तद्युतविवरात् पलभा याम्ये सौम्ये भुजो भवेत् सौम्यः ।
याम्याग्राया पलभा शोध्या यामो भुजः सौम्ये ॥ २८ ॥
इष्टच्छायापलभाविवरं वाऽग्रा परापमांशेभ्यः ।
अभ्यधिकाः पलभागा मध्यभुजस्तत्र सौम्यः स्यात् ॥२९॥
क्रान्तिज्या वेष्टकर्णघ्नी लम्बाप्ताऽग्रा ततो भुजः ।
तद्वर्गं शोध्य(२) भावर्गान्मूलं कोटिश्च जायते ॥ ३० ॥
इष्टच्छायागुणिता त्रिज्या तत्कर्णभाजिता दृग्ज्या ।
तत्कृतिरहितत्रिज्याकृतितो मूलं स शङ्कुः स्यात् ॥३१॥
त्रिज्यागुणितः शङ्कुर्लम्बकजीवाविभाजितश्छेदः ।
त्रिज्याहतो द्युकर्णेन विभक्तो नतज्या स्यात् ॥३२॥
स्वान्त्या तथा विरहिता व्युत्क्रमजीवाभिरत्र चापं च ।

(१) अत्र सन्धिः पाणिनिविरुद्धः ।
(२) 'शोधयित्वा' इह शोध्येति पाणिनिविरुद्धः ।

पूर्वापराह्णकाले षष्ठ्याऽभिहृतं नतप्राणाः ॥ ३३ ॥

रविनतभागाच्चलवा-
न्तरसंयोगौ दिगैक्यभेदे च ।
क्रान्तिर्भवति हि तज्ज्या
त्रिज्यागुणिता परापमज्यकया ॥ ३४ ॥

लब्धाच्चापं भानुर्मेषादिः कर्कटादिगः षड्भात् ।
शोध्यस्तुलादिगश्चेत् षड्भयुतोऽर्कः स्फुटो भवति॥३५॥
मकरादिगो भचक्राच्छुद्धो मध्याह्नकालिकः स्पष्टः ।
तस्मादसकृन्मान्दं वामं वा मध्यमोऽर्कः स्यात् ॥ ३६ ॥
इष्टार्काग्रागुणिता लम्बकजीवा स्वकर्णविहृताऽऽप्ता ।
क्रान्तिज्या स्याच्च ततः पूर्ववदर्कः स्फुटो भवति ॥३७॥
त्रिज्यासमकर्णाहृता द्वादशगुणिताऽक्षजीवया च गुणा ।
परमापमज्ययाऽऽप्ता भुजजीवा तद्धनुः सूर्यः ॥ ३८ ॥
सलिलसमीकृतभूमौ चक्रलवार्धाङ्गुलेन१८०सद्वृत्तम् ।
तत्र च ककुभः साध्या मध्ये शङ्कुश्च संस्थाप्यः ॥३९॥
इष्टदिनापमजीवा खधृतिघ्नता लम्बजीवयाऽऽप्ताऽग्रा ।
उत्तरगोले भानौ पलभा शोध्या भुजो भवेद्याम्यः॥४०॥
दक्षिणगोलगते वा पलभा योज्या भुजो भवेत् सौम्यः ।
तद्भुजवर्गः शोध्यः खखयुगनेत्राग्नितः पदं कोटिः॥४१॥
केन्द्रात् प्रसारणीया प्राच्यां वरुणे भुजस्ततो देयः ।
तस्यानद्वयचिह्नं मध्यविभागे तथा चिह्नम् ॥ ४२ ॥

तच्चिह्नत्रयकेन्द्राद् दृत्तत्रितये कृते च मत्स्यौ स्तः ।
तन्मत्स्यपुच्छरेखाद्वयसंयोगाद्विधाय वृत्तैकम् ॥ ४३ ॥

त्रिभद्युकर्णार्धगुणा पृथक् पृथक्
क्रमादथैकद्वितृतीयभज्याः ।
निजद्युकर्णार्धहृता धनूंषि
शोध्यान्यधोधः खरसाहृतानि ॥ ४४ ॥

लङ्कोदयप्राणचयास्तु मेषात्
क्रमोत्क्रमाभ्यां चरजासुभिः स्वैः ।
क्रमोत्क्रमाभ्यां च विहीनयुक्ताः
स्वीयोदयप्राणचया भवन्ति ॥ ४५ ॥

भार्गभोग्यलवा निजोदयहृताः
खगन्यु-३० हृता यत् फलं
स्वेष्टप्राणचयाद्विशोध्य पुरतो
मानानि शोध्यान्यतः ।
शेषं खाग्नि-३० हतं त्वशुद्धविहृतं
भागादिकं तत्फलं
शुद्धर्क्षेण च संयुतं भवति तत्
प्राग्भूजवृत्ते स्थितम् ॥ ४६ ॥

प्राग्भूजलग्नं रस-६ राशिसंयुतं
पश्चात् कुजे तद्भवतीह लग्नम् ।

मध्यन्दिनाद्धाचिदलाङ्कतेष्या:
प्राणा नताः स्युः परपूर्वभागाः॥ ४७॥
लङ्कोदयैर्लग्नमृणां विधेयं
खमध्यजं पूर्वनतासुभिस्तत्।
पश्चान्नतप्राणचये धनाख्यं
तत्षड्भ-६युक्तं च रसातलाख्यम्॥ ४८॥
इष्टासुतः शुद्ध्यति नो यदा ते
भोग्यासवः खाभिग्नि-३० गुणास्तदेष्टाः।
प्राणा विभक्ताश्च निजोदयेन
भागादितद्युक्तरविर्विलग्नात्॥ ४९॥
सूर्यस्य भोग्यासुयुता विलग्न-
भुक्तासवो मध्यममानयुक्ता
इष्टासवोऽह्नि प्रभवन्ति रात्रौ
सषड्भसूर्यात् समयश्च लग्नम्॥ ५०॥
इष्टासवः खाङ्क-९० हता दिनर्धा-
सुभिर्विभक्ताः क्रमशिञ्जिनी च।
तया हताऽभीष्टदिनार्धकाले
तदुन्नतज्या त्रिभजीवयाऽऽप्ता॥ ५१॥
लब्धस्य चापं च विधाय भानोः
पूर्वापरस्थस्य समुन्नतांशाः।

इत्थं शशाङ्कादिखगर्क्षकाणां
समुन्नतांशाः परपूर्वभागे ॥ ५२ ॥

यन्त्रं चक्रदलार्धं धातुजमथवा सुदारुजं श्लक्ष्णम् ।
प्राकारद्वययुक्तं तत्र च रन्ध्रे भवेदिटवेधार्थम् ॥ ५३ ॥

तत्रेशानगकेन्द्राद्वृत्तं तत्रोन्नतांशका नवतिः ।
स्थाप्याः समान्तरस्थाः केन्द्रगसूत्रावलम्बितो लम्बः ॥ ५४ ॥

विध्वा खगं लम्बगतोन्नतांश-
ज्या त्रिज्यका-१०००घ्नी च विभाजिता च ।
परोन्नतांशज्यकयाऽऽप्तचापं
दिनार्धनिघ्नं खनवा-९०ऽप्तनाड्यः ॥ ५५ ॥

विध्वा रविं लम्बगतोन्नतांशा
नाड्यो गतैष्या दिवसे स्युरेवम् ।
रात्रौ भताराग्रहतोऽथ वक्ष्ये
तुरीययन्त्रप्रवरे च कालम् ॥ ५६ ॥

दृक्कर्मयुक्तस्य खगस्य नाड्यो
लङ्कोदयैः पञ्चदश प्रयुक्ताः ।
तन्मध्यनाड्यः स्वदिनार्धहीना
युक्ता भवन्ति ह्युदयास्तनाड्यः ॥ ५७ ॥

विध्वा खगं प्राक्परयोश्च नाड्य-
स्तद्युक्तहीना उदयास्तनाड्यः ।

सूर्यास्तनाडीरहिता गतास्ताः
सूर्यास्तकालाद्ग्रहतस्तथा स्युः ॥ ५८ ॥

द्विगुणां तु तुरीयाख्यां चापयन्त्रं प्रजायते ।
चापयन्त्रं द्विगुणितं चक्रयन्त्रं प्रजायते ॥ ५९ ॥

अथ शुकवलययन्त्रं विस्तृतं लम्बितं च
द्युदलवलयमन्ते रन्ध्रमूर्ध्वं विधाय ।
निजनिजदिनखण्डेऽङ्कं विलोक्योन्नतांशै-
र्दिनगतघटिकैष्या रन्ध्रवर्त्मस्थगङ्कात् ॥ ६० ॥

अथ दिनदलचिह्नां लम्बितां यष्टिकां वा
तदुपरितनशङ्कुं यष्टिकार्कांशतुल्यम् ।
विरचय तदधऽऽधोऽङ्कं विलोमप्रभाभि-
र्दिनगतघटिकैष्याः शङ्कुभा यत्र लग्ना ॥ ६१ ॥

अर्काहतोन्नतज्या नतजीवाप्ताऽङ्गुलादिका वामम् ।
छाया त्रिज्यार्कहता नतजीवाप्ता च कर्णः स्यात् ॥ ६२ ॥

घटदलघटिता घटिका
ताम्रमयी रन्ध्रसंयुता इष्टा ।
रन्ध्रं तथा यथाऽम्बुनि
मज्जति घटिकाप्रमाणे सा ॥ ६३ ॥

एवं मयूरनरवानरकीरयन्त्रैः
कालो दिवाऽथ निशि वा गणकेन साध्यः ।

संवेणुसूत्रजलसूत्रविधानगर्भै-
रेवं ग्रहांश्च समयञ्च खगोलकेन ॥ ६४ ॥
समभूतले सुवलयं हरितः साध्यांश्च केन्द्रतः कोटिः ।
देया पूर्वपरस्थे प्रत्यक्पूर्वामुखी खचरे ॥ ६५ ॥
कोव्यग्रतः स्वीयदिशि प्रदेयो
भुजश्च तत्कालविभास्पृगत्र ।
शङ्कुस्थकर्णानुगसूत्रबद्ध-
नलस्य रन्ध्रेण खगं प्रपश्येत् ॥ ६६ ॥

इति श्रीवृद्धवसिष्ठब्रह्मर्षिप्रणीतज्योतिषस्कन्धे विश्वप्रकाशे
त्रिप्रश्नाधिकारः ।

वामदेवोऽथ संपूज्य भक्त्या परमया गुरुम् ।
वसिष्ठं परिपप्रच्छ प्रसन्नवदनाम्बुजम् ॥ १ ॥
गुरो देव मुनिश्रेष्ठ ग्रहणे चन्द्रसूर्ययोः ।
को हेतुः किं फलं दानात् कर्मणा केन साध्यते ॥ २ ॥

वसिष्ठ उवाच ।

शृणुष्वैकमना भूत्वा गुह्यं ज्ञानमतीन्द्रियम् ।
प्रवक्ष्याम्यतिभक्तानां नादेयं विद्यते मम ॥ ३ ॥
दर्शान्त(१)काले ऽर्कविधू समांशौ
भार्धान्तरे तौ खलु पूर्णिमान्ते ।

(१) भसन्ति २ पु० पा० ।

इन्दोश्च सम्यौ नियतं च भानो-
र्मध्यग्रहो लम्बवशात् कदाऽपि ॥ ४ ॥
चन्द्रच्छितिः शरगुणाब्धिवियत्कलं वा ५०४३५
भूपृष्ठतोऽथ तरणेः किल योजनैश्च ।
भूभृच्छरैकयुगसप्तरसा ६८४१५७ निरुक्ता
ह्येवं विधोरुपरि भास्करमण्डलं स्यात् ॥ ५ ॥
भानोर्महीगोलविभा हि भार्धे
सदा तदा तत्समचन्द्रपाते ।
वा चन्द्रपातेऽर्कसमेऽधिकोने
कियल्लवैर्वा ग्रहणं रवीन्द्वोः ॥ ६ ॥
तदर्कबिम्बस्य शशाङ्कबिम्ब-
माच्छादकं स्याच्छशिमण्डलस्य ।
भूगोलभाच्छादनहेतुरुक्ता
यतोऽर्कगोभ्यः खलु शौक्ल्यमिन्दौ ॥ ७ ॥
स्वयं समागत्य महासुरोऽयं
स्वयम्भुवस्तत्र वरप्रदानात् ।
उपैति तोषं जपहोमदान-
स्नानादि गृह्णन् हि विधुन्तुदाख्यः ॥ ८ ॥
तच्चन्द्रभान्वोर्ग्रहणं हि षड्भिः
षड्भिश्च मासैर्दलसंयुतोनैः ।

वा मासि पर्वद्वितयं कदाऽपि
वीथ्यैकया दृक्पथमेति तद्वा ॥ ९ ॥
स्नानदानहवनादि यत् कृतं
तन्न पर्वणि तदक्षयं भवेत् ।
वारिदागमनमुद्रिते तथा-
ऽप्यक्षयं भवति तत् सुनिश्चितम् ॥ १० ॥
यत् पर्वरात्रौ तरणेर्दिवेन्दो-
स्तत्स्नानदानार्हमिदं न किञ्चित् ।
अर्धोदये क्रान्तिभवे हि पाते
रात्रौ न दानादि कदाऽपि योग्यम् ॥ ११ ॥
दिवाऽथ निशि वाऽर्कस्य संक्रान्तावक्षयं भवेत् ।
पर्वस्वेतेषु दानादि माङ्गल्यं नात्र सिद्ध्यति ॥ १२ ॥
कर्णः खखाक्षरस६५००योजनको रवेः स्याद्
विम्बस्य खाष्टयुग४८०योजनको विधोश्च ।
स्वस्पष्टभुक्तिगुणितो निजमध्यभुक्ति-
भक्तस्तदा स्फुटतरौ श्रवणौ भवेताम् ॥ १३ ॥
भानुमण्डलकर्णोऽसौ
भगणैः स्वै-४३२००००र्हतो हृतः ।
शशाङ्कभगणै-५७७५३३३६र्वेन्दु-
कक्षाऽधो३२४०००रविकक्षया३३१५०० ॥ १४ ॥

भक्तश्चन्द्रस्य कक्षायां
विष्कम्भस्तत्तरणोर्भवेत् ।
तौ कर्णौ तिथि-१५भक्तौ स्यू
रवीन्द्वोर्मानलिप्तिकाः ॥ १५ ॥

स्फुटचन्द्रभुक्तिगुणिताद्
भूकर्ण-१६००न्मध्य-७९०।३५योद्धृताल्लब्धम् ।
सूची महीरविश्रुति-
विवरहृतश्चन्द्रमध्यकर्णश्च ॥ १६ ॥
मध्यार्ककर्ण-६५००भक्तो-
लब्धं सूच्या विशोधयेच्छेषम् ।
इन्द्रियशशाङ्क-१५ भक्तं
भवति च नियतं तमोमानम् ॥ १७ ॥
गतैष्यनाडीगुणिता ग्रहस्य
भुक्तिर्विभक्ता खरसैः ६० कलास्ताः ।
ऊनं धनं खेटकलासु वामं
शशाङ्कपातेऽपि च वक्रखेटे ॥ १८ ॥
एवं हि तत्कालभवास्तु खेटाः
स्पष्टा अमान्ते भलवादितुल्यौ ।
स्तः पूर्णिमान्ते भदलान्तरेण
भागादितुल्यौ खलु पुष्पवन्तौ ॥ १९ ॥

ग्राह्यग्राहकमानयोगदलत-
स्तात्कालिकेन्दोः शरः
शोध्यः शेषमिदं तदा हि तमसा
छन्नं च तस्मिन् यदि ।
पूर्णं ग्राह्यकलासमेऽथ यदि तद्
ग्राह्याधिकं हीनितं
खच्छन्नं सकलग्रहे
भवति तद् ग्राह्यप्रमाणेन च ॥ २० ॥

यथा ग्राह्यकलाल्पे च तमश्छन्ने तथाऽल्पता ।
योगार्धादधिके क्षेपे ग्रहणस्य न सम्भवः ॥ २१ ॥

ग्रस्तं शशाङ्कस्य कलाद्वयं चेत्
कलात्रयं भानुमतो न लक्ष्यम् ।
सत् किञ्चिदूनं ह्युदयास्तकाले
लक्ष्यौ यतस्तौ करगुम्फहीनौ ॥ २२ ॥

छाद्यच्छादकयोगा-
योगौ दलितौ पृथक् तयोर्वर्गौ ।
विक्षेपवर्गहीनौ
तन्मूले षष्टिसंगुणेऽर्केन्द्वोः ॥ २३ ॥

गत्यन्तरेण भक्ते स्थितिमर्दार्धे च नाडिकाद्ये स्तः ।
स्थित्यर्धघ्नी भुक्तिः षष्टि ६० हृता तत्फलं स्पर्शे ॥ २४ ॥

खचरे शोध्यं मोचे
योज्यं चैवं पुनः पुनः कार्यम्।
तद्विक्षेपस्थितिदल-
नाड्याद्यसकृत् स्थिरं भवति यावत्॥ २५॥

पर्वान्तकाले स्थितिखण्डनाडी-
हीनं घनं स्पर्शविमुक्तिकालौ।
तद्वद्विमर्दार्धविहीनयुक्ते
निमीलनोन्मीलनके भवेताम्॥ २६॥

अथेष्टकालाद्ग्रहणं कियत् स्या-
दितीष्टहीनस्थितिखण्डनिघ्नम्।
भुक्त्यन्तरं षष्टिहृतं च कोटी
रवेश्च मध्यस्थितिखण्डनिघ्नी॥ २७॥

स्पष्टाहता कोटिहतेन्दुबाणो
भुजस्तयोर्वर्गयुतेः पदं सः।
कर्णांस्तयोर्मानयुगार्धतोऽसौ
शोध्यश्च तत्कालतमोऽभिभूतम्॥ २८॥

मध्यग्रहादूर्ध्वमितीष्टनाडी-
स्थित्यर्धतो मौक्षिकतो विशोध्य।
शेषं पुरावत् परिकल्प्य चेष्ट-
मेवं विमुक्तेस्तमसाऽभिभूतम्॥ २९॥

इष्टग्रासोनतन्मानयोगार्धक्षतितः कृतिम् ।
तत्कालेषोः पदं कोटिर्भानोः स्थित्यर्धसंगुणा ॥ ३० ॥
मध्यस्थित्यर्धसंभक्ता कोटिलिप्ताः खषड्गुणाः ।
गत्यन्तरहृता नाड्यो गतैष्याः स्पर्शमौक्षिकाः ॥ ३१ ॥
नतासुव्युत्क्रमज्याघ्नी पलज्या त्रिज्यया हृता ।
चापं नता उदग्याम्याः पूर्वापरकपालयोः ॥ ३२ ॥
ग्राह्याद्राशित्रययुतात् क्रान्त्यंशैः संस्कृता नताः ।
ताभ्यो जीवा खसप्ता-७०प्ता वलनांशाङ्गुलात्मिका ॥ ३३ ॥
दिनार्धनाडिकायुक्तं दिनमानं च सोन्नतम् ।
तद्दिनार्धहृतं हारः शरादीनां भवेदिह ॥ ३४ ॥
ग्राह्याद्ग्राहकतो बाणाद्ग्रासाद्वा रविभाजितात् ।
लब्धाङ्गुलानि तेषां तु ग्रहणे चन्द्रसूर्ययोः ॥ ३५ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे
चन्द्रग्रहणाधिकारश्चतुर्थः ॥

अथामान्ते हि चन्द्रार्कौ राश्यंशादिसमावपि ।
प्राक्पश्चात् समसूत्रे हि नो यातोऽतस्तु लम्बनम् ॥ १ ॥
यथा यथा खमध्यं च रविरेति तथा तथा ।
लम्बनस्य विरामः स्यान्मध्याङ्के लम्बनं न हि ॥ २ ॥
उदयास्तमयेऽर्केन्द्वोः पादोनांश-०।४५मितान्तरम् ।
समसूत्रे तयोरेवं समसूत्रमहर्दले ॥ ३ ॥
स्वदेशांशांशतुल्याश्चेन्मध्यलग्नापमांशकाः ।

तत्रावनतिनाशः स्यात् सा नतिर्लम्बनाद्भवेत् ॥ ४ ॥
लम्बनं हि यथार्केन्द्वोः पूर्वापरवशाद्भवेत् ।
तद्वच्चम्यहं महाभाग देशकालवशान्नतिः ॥ ५ ॥
पर्वान्तकाललग्नं तद्भुजजीवा परापमज्या-४०५घ्नी ।
लम्बज्यया विभक्ता सोदयजीवा भवेदत्र ॥ ६ ॥
पर्वान्तमध्यलग्नात् क्रान्तिलवांशयोगविवरं वा ।
तद्दिक्साम्यासाम्ये नतांशकज्या हि मध्यज्या ॥ ७ ॥
मध्यज्यया विनिहतोदयजीवाप्ता त्रिभज्यया वर्गः ।
मध्यज्याया वर्गस्तद्युतिमूलं स दृक्क्षेपः ॥ ८ ॥

तत्त्रिज्याकृति-१००००००विवरा-
न्मूलं शङ्कुः स दृग्गतिः प्रोक्तः ।
नतभुजकोटिज्ये वा
स्पष्टे दृक्क्षेपदृग्गती भवतः ॥ ९ ॥
पूर्णाभ्राभ्रखतत्त्वा२५००००
दृग्गतिभक्ताश्च तत्फलं हारः ।
पर्वान्तमध्यलग्ना-
र्कयोर्वियोगज्यका कार्या ॥ १० ॥

सा जीवा हरभक्ताऽन्तरलम्बनकं शशाङ्कभास्करयोः ।
तन्नाडिकादिकं स्यात् पूर्वापरयोश्च दृक्सूत्रात् ॥ ११ ॥
पूर्वापरस्थितेऽर्के हीनं युक्तं च तेन पर्वान्तः ।
पुनरपि तत्पर्वान्ताल्लम्बनघटिका च संसाध्या ॥ १२ ॥

पुनरप्येवं तावद्यावत् सर्वं स्थिरं भवति ।
वायु-४९ हृता दृक्क्षेपा त्रिभजीवाप्ता नतिर्भवति ॥१३॥
सा विज्ञेया मध्यज्या दिग्त्रशतो यमोत्तरे च दिशौ ।
तत्संस्कृतेन्दुबाणः स्पष्टः स्यादिह विशेष एषोऽपि ॥१४॥

चन्द्रग्रहवन्माने
छाद्यच्छादकयोस्ततस्तमस्कन्ने ।
स्थितिमर्दार्धं तस्माद्-
वलनग्रासाङ्गुलानि साध्यानि ॥ १५ ॥
स्थित्यर्धहीनयुक्तात्
पर्वान्ताल्लम्बसंस्कृतान्मध्ये ।
उक्तवदिह लम्बनके
स्पर्शविमुक्त्युद्भवेऽसकृत् सिद्धे ॥ १६ ॥

प्राक्कपाले यदा भानोः स्पर्शमध्यविमुक्तयः ।
मध्यलम्बनतः स्पर्शलम्बनं त्वधिकं भवेत् ॥ १७ ॥
मोक्षलम्बनकं हीनं तदा तत्स्पर्शमध्ययोः ।
मध्यमोक्षकयोश्चैव विश्लेषस्तेन संयुते ॥ १८ ॥
स्पर्शमोक्षस्थितिदले साध्ये ते मध्यतोऽथ वा ।
स्पर्शहीनं तदा मोक्षमधिकं विवरैस्तु वै ॥ १९ ॥
स्पर्शमोक्षस्थितिदले हीनं माध्यं स्फुटे तथा ।
पश्चात् कपालेऽथ रवेः स्पर्शमध्यविमुक्तयः ॥ २० ॥

विपरीतमतः कार्यं स्थित्यर्धं स्पर्शमौक्षिकम् ।
मध्यग्रहस्तु मध्याह्ने तदा स्तस्ते च लम्बने ॥ २१ ॥
स्पर्शमध्यौ यदा पूर्वे तयोरन्तरसंयुतम् ।
मध्यस्थितिदलं स्पार्शं मौक्षं तल्लम्बनान्वितम् ॥ २२ ॥
पश्चार्धे मध्यमोक्षौ वा तयोरन्तरसंयुतम् ।
मध्यस्थितिदलं मौक्षं स्पार्शं तल्लम्बनान्वितम् ॥ २३ ॥
एवं मध्ये विमर्दार्धे सर्वग्रासे समागते ।
तत्स्थित्यर्धेन संयुक्तौ लम्बनेन युतोनितौ ॥ २४ ॥
पर्वान्तकालौ क्रमतो मीलनोन्मीलनाख्यकौ ।
भवतश्च तथा स्पर्शमोक्षकालाविति स्फुटौ ॥ २५ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्व-
प्रकाशे सूर्यग्रहणाधिकारः पञ्चमः ।

वामदेव उवाच ।

देवदेव गुरुश्रेष्ठ त्रिकालज्ञ दयानिधे ।
कथ्यतां परिलेखं च सूर्याचन्द्रमसोर्ग्रहे ॥ १ ॥
कुतः स्पर्शः कुतो मोक्षः कुतो मध्यग्रहो भवेत् ।
मीलनोन्मीलनं तत्र सर्वग्रासे कुतो भवेत् ॥ २ ॥
एतत्सर्वं तथाऽन्यच्च कथयस्व मम प्रभो ।

वसिष्ठ उवाच ।

परिलेखमहं वक्ष्ये शृणुष्वैकाग्रमानसः ॥ ३ ॥

रहस्यं परमं पुण्यं गुह्यं ज्ञानमतीन्द्रियम्।
समपीठेऽथ वलयं सप्तवर्गाङ्गुलेन च॥ ४॥
कर्कटेन च तद्वृत्तं महत्संज्ञं प्रकीर्त्तितम्।
छाद्यच्छादकयोर्मानयोगार्धकर्कटेन च॥ ५॥
तत्केन्द्रादेव वलयं द्वितीयं मध्यमाह्वयम्।
ग्राह्यमानाङ्गुलदलकर्कटेन तृतीयकम्॥ ६॥
वृत्तं कुर्याच्च तन्मध्ये तद्वृत्तं ग्राह्यमण्डलम्।
तत्र पूर्वापरा रेखा कार्या याम्योत्तरा तथा॥ ७॥
परं तु पूर्वापरयोर्व्यत्ययोऽत्र दिशोर्भवेत्।
प्राच्यां प्रग्रहणं मोक्षः पश्चादिन्दोर्ग्रहे रवेः॥ ८॥
विपर्ययाच्छशाङ्कस्य विपरीतदिशः शराः।
यथादिशं हि वलनं स्पार्शं स्याद्धिमदीधितेः॥ ९॥
मौक्षिकं वलनं वामं विपरीतमिदं रवेः।
वृत्ते महति वलनं ज्यारूपं हि यथोक्तवत्॥ १०॥
दत्वा तन्मध्यतो रेखा तद्युतिर्मध्यमाह्वया।
ग्रासमौक्षिकविक्षेपौ प्राक्पश्चाच्छशिनस्ततः॥ ११॥
पश्चात् प्राक् तरखोर्दर्यौ रेखातत्केन्द्रयोरपि।
ग्राह्यवृत्तेऽथ तद्योगौ तत्र स्तः स्पर्शमोक्षकौ॥ १२॥
अथ माध्यं हि वलनं तद्विक्षेपैकता यदि।
प्राङ्मुखं स्वदिशोर्देयं भेदे पश्चान्मुखं तथा॥ १३॥

शग्राङ्कपरिलेखे च विपरीतमिदं रवेः ।
वलनाग्रात् पुनः सूत्रं मध्यकेन्द्रं प्रवेशयेत् ॥ १४ ॥
मध्यकेन्द्राच्च विक्षेपस्तस्मिन् सूत्रे च मध्यमः ।
शरान्ताद्देव केन्द्राच्च ग्राह्यकार्धेन मण्डलम् ॥ १५ ॥
कुर्यात् कर्कटकेनैव तद्ग्रस्तं तमसा भवेत् ।
स्पर्शमध्यविमोक्षेषु विक्षेपाग्रेषु बिन्दवः ॥ १६ ॥
स्पर्शमध्यमयोर्मध्ये शरयोर्मध्यमोक्षयोः ।
मत्स्यैर्विधायाथ तयोर्मुखपुच्छविनिर्गतम् ॥ १७ ॥
प्रसार्य सूत्रद्वितयं तद्युतिर्यत्र जायते ।
तत्केन्द्राद्देव वलयं कुर्याद्बिन्दुत्रयस्पृशा ॥ १८ ॥
कर्कटेन स पन्थाः स्याद्ग्राह्यकस्य द्विजोत्तम ।
अथ मध्यशरान्ताच्च स्पर्शमोक्षशराग्रगे ॥ १९ ॥
रेखे कार्ये च तौ मार्गौ ज्ञेयौ प्रग्रहमोक्षकौ ।
ततो द्विग्मध्यतो वृत्तं कृत्वा कर्कटकेन च ॥ २० ॥
तयोर्मानान्तरार्धेन तद्रेखावृत्तयोगयोः ।
ग्राह्यकार्धेन वलयं यत्र तद्ग्राह्ययोर्युतिः ॥ २१ ॥
मीलनोन्मीलने तत्र भवतः स्पर्शमोक्षयोः ।
ग्रस्तं धूम्रवर्णं स्यादर्धादूनं विधोर्भवेत् ॥ २२ ॥
अर्धाधिकं कृष्णवर्णं कृष्णताम्रं विमुञ्चतः ।
कपिलं च भवेद्वर्णं सर्वग्रासे द्विजोत्तम ॥ २३ ॥

तदयोग्रहयो चैव कृष्णवर्णो भवेत् सदा ।
रहस्यमेतदाख्यातं तवाग्रे गुह्यमुत्तमम् ॥ २४ ॥
अपरीक्षितशिष्याय दातव्यं न कदाचन ।

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे
परिलेखाधिकारः षष्ठः ॥ ६ ॥

वसिष्ठ उवाच ।

अथ ताराग्रहाणां च युद्धं वक्ष्ये द्विजोत्तम ।
समागमं च तद्युद्धं चतुर्धा भवति ध्रुवम् ॥ १ ॥
अंशुमर्दोऽपसव्याख्यमुल्लेखो भेद इत्यपि ।
अंशाधिकं यदा खेटान्तरं स्यात् स समागमः ॥ २ ॥
अंशुमर्दनकं युद्धमंशुयोगे परस्परम् ।
अंशादूनेऽपसव्याख्यं युद्धमेकोऽत्र चेदणुः ॥ ३ ॥
उल्लेखाख्यं च तत् स्पर्शाद्भेदे भेदः प्रकीर्त्तितः ।
समागमश्च चन्द्रेण प्रोच्यतेऽपि द्विजोत्तम ॥ ४ ॥
सूर्येणास्तमनं सार्कं सर्वेषां च नभःसदाम् ।
अथ तद्गणितं वच्मि यथाऽधीतं पितामहात् ॥ ५ ॥

प्राग्याथिनोः खेचरयोर्द्वयोश्च
शीघ्रग्रहो मन्दखगाधिकश्चेत् ।
गतोऽन्यथा वा भविता हि योग-
स्तत्खेटयोर्वक्रगयोस्तु वामम् ॥ ६ ॥

प्राग्यायिखेटोऽभ्यधिको व्यतीतो
भावी च वक्रद्युचरोऽधिकश्चेत् ।
तत्खेटयोरन्तरलिप्तिकाश्च
स्वस्पष्टभुक्त्याऽभिहृता विभक्ताः ॥ ७ ॥

गत्यन्तरेणैव तयोरथैक-
मार्गस्थयोश्चेदथ भिन्नगत्योः ।
तद्भुक्तियोगेन कलादि लब्धं
शोध्यं गते भाविनि देयमत्र ॥ ८ ॥

तयोर्वक्रगयोर्देयं गते शोध्यं च भाविनि ।
एकस्मिन् वक्रगे शोध्यं देयं मार्गिणि भाविनि ॥ ९ ॥
संयोगेऽथ गते शोध्यं मार्गगे वक्रगे धनम् ।
राश्यंशादिसमौ खेटौ भवेतामिति संस्कृतौ ॥ १० ॥
ग्रहान्तरकलास्तास्तु हृता भुक्त्यन्तरेण वा ।
भुक्तियोगेन तल्लब्धं दिनादिकफलं भवेत् ॥ ११ ॥
अक्षच्छायाङ्गुलाभ्यस्ताः क्षेपलिप्ताश्च भास्करैः ।
लब्धं तेन हृता नाडी स्वनतस्य विभाजिता ॥ १२ ॥
स्वदिनार्धेन लब्धं यत् तदक्षजफलं भवेत् ।
स्वमृणं सौम्यविक्षेपे पश्चात् प्राक्स्थितखेचरे ॥ १३ ॥
याम्यबाणे विलोमेन एवमाक्षजसंस्कृतिः ।
राशित्रययुतात् खेटात् क्रान्तेर्भागाः शराहताः ॥ १४ ॥

षष्ट्या हृताश्च लिप्तादि फलमायनजं भवेत् ।
तत्फलं क्रान्तिशरयोः स्वन्दशां भिन्नतुल्ययोः ॥ १५ ॥
नक्षत्रग्रहयोगेषु ग्रहास्तोदयसाधने ।
शृङ्गोन्नतौ च चन्द्रस्य दृक्कर्मादाविदं स्मृतम् ॥ १६ ॥
तावुभावपि तच्छुद्धौ समराशिलवादिकौ ।
तात्कालिकौ पुनः कार्यौ विक्षेपौ च तयोः पुनः ॥ १७ ॥
दिग्भेदे बाणयोर्योगो दिगैक्ये त्वन्तरं तथा ।
शेषं ग्रहान्तरं ज्ञेयं तत्साक्षाद्दक्षिणोत्तरे ॥ १८ ॥
कुजार्किज्ञामरेज्यानां त्रिंश३०दर्धा१५र्ध७।३०वर्धिताः ।
विष्कम्भाश्चन्द्रकक्षायां भृगोः षष्टिरुदाहृता ॥ १९ ॥
खाभ्रखाश्वि-२००० हता व्यासाः
स्थिरकर्णेन भाजिताः ।
त्रिज्यया सहितेनाप्ताः
स्फुटव्यासा भवन्ति ते ॥ २० ॥
तिथि-१५भक्ता मानलिप्ता भवेयुस्ता द्विजोत्तम ।
भेदे ग्रहणवत् कर्म कार्यं स्थित्यर्धपूर्वकम् ॥ २१ ॥
एवं ताराग्रहाणां च कुर्यात् संयोगसाधनम् ।
याम्यदिक्स्थो ग्रहो युद्धे विजितोऽणुरदीप्तिमान् ॥२२॥
रूक्षवर्णश्च विध्वस्तो भवेद्धीनबलः सदा ।
दीप्तिमान् बलवान् स्थूलो जयी चोत्तरसंस्थितः ॥२३॥

यद्युभावपि संदीप्तौ भवतस्तौ समागमौ ।
तावुभावपि रूक्षौ चेत् तदा स्तः कूटविग्रहौ ॥ २४ ॥
प्रायः शुक्र उदक्स्थो वा याम्यदिक्स्थः सदा जयी ।
ताराग्रहेभ्यः सर्वेभ्यो महत्त्वान्मण्डलस्य च ॥ २५ ॥
स्वस्वकक्षास्थितात् खेटा गगने विचरन्ति हि ।
मर्त्यदृग्विषये भान्ति संयुक्ता इव वत्सल ॥ २६ ॥
परन्तु मम खेटानां दर्शिता विश्वयोनिना ।
हिताहिताय लोकानां कल्पनेयं द्विजोत्तम ॥ २७ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे ताराग्रहयोगाधिकारः सप्तमः ॥ ७ ॥

वसिष्ठ उवाच ।

नक्षत्राणामथो वक्ष्ये खराशिवलये स्थितिम् ।
तत्राग्रे वामदेव त्वं शृणुष्वैकाग्रमानस ॥ १ ॥
अष्टौ ८ नखाः २० सप्तगुणा ३७ नवाब्धी ४९
रामर्त्तवो ६३ बाणनगा-७५ स्त्रिनन्दाः ९३ ।
रसाभ्रचन्द्रा-१०६ श्च नवाभ्रचन्द्रा १०९
नवाश्विचन्द्रा १२९ युगवेदचन्द्राः १४४ ॥ २ ॥
शराक्षचन्द्रा १५५ वियदद्रिचन्द्राः १७०
खसर्पचन्द्रा १८० नवनन्दचन्द्राः १९९ ।
गुणैकयुग्मं २१३ युगबाहुयुग्मं २२४
नवाश्वियुग्मं २२९ कुयुगाश्विनश्च २४१ ॥ ३ ॥

युगाश्वनेत्रं २५४ खरसाश्विनश्च २६०
नगाङ्कनेत्राणि २६७ खनागयुग्मं २८० ।
खनन्दनेत्राणि २९० खबाणरामाः ३२०
रसाश्विरामा ३२६ नगवह्निरामाः ३३७ ॥ ४ ॥

खमश्विभादेः क्रमशो लवाश्च
बाणान् प्रवक्ष्येऽथ दिशो-१०ऽर्क१२ संख्याः ।
पञ्चे-न्दु १ रामाः ३ नव ९ षट् ६ ख-० सप्ता:७
खं० भास्करा१२ विश्व-१३ मिताः शिवा-११श्च ॥५॥

युग्मं २ तथा भानि २७ च सार्धमेकं १। ३०
रामा ३ युगा-४ न्यङ्क-९ मिताः दलं वा ४ । ३० ।
सार्धाश्च बाणाः ५ । ३० खरसाः ६० खरामाः ३०
षड्वह्नयो ३६ऽथार्धं० । ३० लवो जिनाश्च २४ ॥ ६ ॥

षडश्विनः २६ खं० क्रमशोऽश्विभादे-
र्भागा निरुक्ताः कमलासनेन ।
दस्रान्तकाग्न्युत्तरफल्गुनीनां
मघादितिस्वात्यभिजिच्छ्रुतीनाम् ॥ ७ ॥

भगाजपद्द्वयपुष्यभाना-
मुदग्दिशस्ते च शराः सपूष्णाम् ।
शेषर्क्षकाणां यमदिक्स्थिताश्च
तत्संस्कृता क्रान्तिरिह स्फुटा स्यात् ॥ ८ ॥

अगस्त्यस्य मुनेस्तात
कर्कटादौ स्थितिः स्मृता ।
याम्यदिक्कस्य विक्षेपः
प्रोक्तस्तस्य खकुञ्जराः ८० ॥ ९ ॥

लुब्धकस्य खनागां-७० शा
याम्ये बाणाः खसागराः ४० ।
वह्नेर्द्विबाणाः ५२ सौम्येषु-
र्गजा ८ ब्रह्महृदस्तथा ॥ १० ॥

बाणाः खाग्निमिताः ३० सौम्ये
नगबाणाः ५७ प्रजापतेः ।
तस्य बाणांशकाः प्रोक्ताः
सौम्ये कुञ्जरवह्नयः ३८ ॥ ११ ॥

अपांवत्सापयोर्भांशे सौम्ये पञ्च ५ रसाः ६ शराः ।
निरक्षदेशे सृष्ट्यादौ तत्स्थितिर्ब्रह्मणोदिता ॥ १२ ॥
वर्त्तमानयुगे गोलं विरचय्य द्विजोत्तम ।
तारकाणां स्थितिः साध्या तथा विक्षेपकांशकाः ॥ १३ ॥

स्थितिर्यस्याद्रिवेदां ४७ शे
विक्षेपोऽभ्यधिको द्वयात् ।
भागात् किञ्चित् तदा भिन्द्या-
द्रोहिण्याः शकटं तु सः ॥ १४ ॥

अथ तेषां तु धिष्ण्यानां प्रमाणं द्युनिशोस्तथा ।
नतोन्नते च दृक्कर्म कुर्यात् सर्वं तु पूर्ववत् ॥ १५ ॥
नभोगयोगवद्योगे ग्रहभुक्त्या दिनादिकम् ।
नक्षत्रध्रुवकात् खेटोऽधिके योगो गतः स्मृतः ॥ १६ ॥
हीने भावी ग्रहे तस्माद्वक्रगे तु विपर्ययः ।
ग्रहेण सर्वदा तेषां विज्ञेयस्तु समागमः ॥ १७ ॥
दस्रसौम्यद्विदैवानामार्यम्णस्य भगस्य च ।
आहिर्बुध्न्याम्बुविश्वेषां योगतारोत्तरा स्मृता ॥ १८ ॥
पुष्यस्वात्यनुराधाया ज्येष्ठायाः श्रवणस्य च ।
मध्यमा योगतारा स्याद्धनिष्ठायास्तु पश्चिमा ॥ १९ ॥
रोहिणीमूलयोश्चैव सार्पस्य च पुनर्वसोः ।
पूर्वा च योगतारा स्यात् कृत्तिकायास्तु दक्षिणा ॥२०॥
तथैव भरणीपित्र्यरेवतीनां च दक्षिणा ।
द्वितीया पश्चिमे तारा योगतारा करस्य च ॥ २१ ॥
अनुक्तानां तु सर्वेषां स्थूलायास्तास्तु तारकाः ।
रज्जुवेधाख्ययन्त्रेण ध्रुवाः शेषखचारिणाम् ॥
साध्याः क्रान्त्यंशकास्तेभ्यो विक्षेपांशा द्विजोत्तम ॥ २२ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे नक्षत्रध्रुवाधिकारोऽष्टमः ॥ ८ ॥

वसिष्ठ उवाच ।

अथ ताराग्रहाणां तु विज्ञानमुदयास्तयोः ।

भानुभाग्रस्तमूर्त्तीनां वामदेव प्रवक्ष्यहम् ॥ १ ॥
जीवलोहितमन्दाश्च रवितोऽभ्यधिका यदा ।
पश्चादस्तं गता ज्ञेया ऊनाः प्रागुदयं गताः ॥ २ ॥
एवमस्तोदितौ ज्ञेयौ वक्रितौ बुधभार्गवौ ।
सूर्यादूनास्तदा प्राच्यामस्तं चन्द्रज्ञभार्गवाः ॥ ३ ॥
यदाऽधिकास्तदा पश्चादस्तं याता भवन्ति ते ।
एवं यदा भवेत् प्राच्यां भास्करोदयकालिकौ ॥ ४ ॥
तदा खेचरमार्त्तण्डौ कुर्याद्वा पश्चिमे तथा ।
सूर्यास्तकालिकौ तौ च ग्रहौ दृक्कर्मसंस्कृतौ ॥ ५ ॥
तयोश्च विवरप्राणाः प्राच्यां साध्या हि पूर्ववत् ।
प्रतीच्यां षड्भयुतयोस्तद्वल्लग्नान्तरासवः ॥ ६ ॥

ते विभक्ताः खतर्कैश्च
कालांशाख्या भवन्ति ते ।
शनिजीवकुजानां च
तिथि-१५ रुद्र-११ घनाः-१७ शकाः ॥ ७ ॥

यदा तत्तुल्यकालांशाः पश्चात् तेऽस्तं गता ग्रहाः ।
पुनस्तत्तुल्यकालांशास्तदा पूर्वोदयं गताः ॥ ८ ॥
शुक्रस्य पश्चादस्तः स्यादष्टाभि-८ रुदयं पुनः ।
तावद्भिरंशैः पूर्वस्यां तत्रास्तं दश-१०भिर्लवैः ॥ ९ ॥
पश्चात् तावद्भिरेवांशैः कालांशैरुदयो भवेत् ।

द्वादशांशैर्बुधस्यैवं चतुर्दश-१४ भिरंशकैः ॥ १० ॥
उक्तांशाभ्यधिकैः कालभागैर्दृश्या भवन्ति ते ।
न्यूनैरदर्शनाः खेटा भानुभाक्रान्तमूर्त्तयः ॥ ११ ॥
तत्कालांशान्तरकलाः कालभुक्त्यन्तरोद्धृताः ।
लब्धं दिनादि च फलं भुक्तियोगेन वक्रिणि ॥ १२ ॥

स्वीयोदयप्राणचयेन भुक्ती
तयोर्विभक्ते खखसपंचन्द्रैः १८०० ।
स्यातां तयोः कालगती च ताभ्यो
दिनादिकं स्याद्गतगम्ययोश्च ॥ १३ ॥

ब्रह्माहृद्व्याधचित्राश्च
स्वातिः कुम्भोद्भवोऽदितिः ।
अभिजिच्छक्रभं दृश्या-
दृश्या विश्वां-१३ शकैरपि ॥ १४ ॥

रोहिणी च मघा हस्तः श्रवणः फल्गुनीद्वयम् ।
धनिष्ठा च विशाखा च दस्रभं मनु-१४ भिर्लवैः ॥१५॥
आश्लेषामूलमैत्राणि कृत्तिका रुद्रदैवतम् ।
आषाढाद्वयमेतानि दृश्यन्ते शरभू-१५ लवैः ॥ १६ ॥
मृगशीर्षं च भरणी पुष्यो दृश्यः कुबाहुभिः २१ ।
शेषाणि भानि दृश्यानि सप्तभूमि-१७ मितांशकैः ॥१७॥

कालांशाः खखनागैक-१८००

गुणिताः स्वोदयासुभिः ।
विभक्त्याऽऽप्ताः स्फुटांशास्ते
तैः स्युर्दृश्या अदर्शनाः ॥ १८ ॥
प्रागुद्गमः सदैतेषां पश्चादस्तमयस्तथा ।
रविद्युभक्त्याऽऽवाप्तिः स्वादिनाद्गतगम्ययोः ॥ १९ ॥
स्वाहिर्बुध्न्याभिजित् स्वातिर्ब्रह्महृद्भानि वासवम् ।
भानुभाभिर्न लुप्यन्ते ह्युदग्दिक्त्वादिषोस्तथा ॥ २० ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे
ग्रहोदयास्ताधिकारो नवमः ॥ ९ ॥

वसिष्ठ उवाच ॥

अथतः संप्रवक्ष्यामि दृश्यादृश्यं विधोस्तथा ।
शृङ्गोन्नतिं द्विजश्रेष्ठ कालं तदुदयास्तयोः ॥ १ ॥
दृश्यादृश्यविधिः प्राग्वत् कार्यश्चन्द्रमसोऽन्तरैः ।
द्वादशांशमितैः पश्चाद्दृश्यः प्राग्यात्यदृश्यताम् ॥ २ ॥
अथार्केन्द्वोः स्फुटक्रान्त्योर्दिक्साम्ये विवरं युतिः ।
दिग्भेदे तज्ज्यका कार्या ज्ञेया सा दक्षिणोत्तरा ॥ ३ ॥
दिगैक्येऽल्पा विधोः क्रान्ती रवेः क्रान्तेर्यदा तदा ।
चन्द्रक्रान्तिदिशो वामं ज्ञेया ज्या दक्षिणोत्तरा ॥ ४ ॥
वा दिगैक्येऽधिका क्रान्तिस्तदा क्रान्तिदिगेव दिक् ।
दिग्भेदेऽल्पाऽधिका क्रान्तिस्तदा क्रान्तिदिगेव दिक् ॥ ५ ॥
मध्यवृत्तगतेन्द्वोर्भार्कांशसंगुणिता तु सा ।

तया हीनार्क १२ निघ्नयवजीवा चेदुत्तरा भवेत् ॥ ६ ॥
शिष्टं याम्यं न चेद्धीना वामहीना तदोत्तरम् ।
दक्षिणा सहिता कार्या भक्ता लम्बज्यया फलम् ॥७॥
भुजः स्वदिङ्मुखो ज्ञेयः कोटिरत्रार्कसन्निभा ।
श्रवणो भुजकोटिभ्यामेवं त्र्यस्त्रं भवेदिह ॥ ८ ॥
अर्कोनचन्द्रभागेभ्यः शुक्लं पञ्चदशोद्धृतम् ।
चन्द्रबिम्बाङ्गुलाभ्यस्तं हृतं द्वादशभिः स्फुटम् ॥ ९ ॥

अर्कस्थानाभिधं बिन्दुं
कृत्वाऽऽदौ समभूतले ।
तस्मात् स्वदिङ्मुखो बाहुः
कोटिः पश्चान्मुखी ततः ॥ १० ॥
बिन्दुकोट्यग्रकं कर्ण-
स्तदग्राच्चन्द्रमण्डलम् ।
तन्मध्ये कर्णमार्गेण
दिक्सिद्धिं परिकल्पयेत् ॥ ११ ॥

कर्णातद्बिम्बयोगाच्च शुक्लं मध्ये प्रवेशयेत् ।
शुक्लाग्रयाम्योत्तरयो रेखा कार्या द्विजोत्तम ॥ १२ ॥
तन्मण्डलयुतौ बिन्दू दत्त्वा मध्ये तयोस्तिमी ।
तन्मत्स्यमुखपुच्छेभ्यः सूत्रे यत्र प्रसारिते ॥ १३ ॥
मण्डले स्पृशतस्तत्र बिन्दू दत्त्वाऽथ बिन्दवः ।

त्र्यो भवन्ति तत्त्रिस्पृग्घनुः कुर्या द्विजोत्तम ॥ १४ ॥

प्राग्विम्बं यादृगेव स्यात्
तादृक् तत्र दिने शशी ।
कोट्या दिक्साधनात् तिर्यक्-
सूत्रान्ते शृङ्गमुन्नतम् ॥ १५ ॥

दर्शयेदुन्नतां कोटिं कृत्वा चन्द्रस्य चाकृतिम् ।
कृष्णे षड्भयुतं सूर्यं विशोध्येन्दोस्तथा सितम् ॥ १६ ॥
दद्याद्वामं भुजं तत्र पश्चिमं मण्डलं विधोः ।
अथ वच्मि द्विजश्रेष्ठ कालं तदुदयास्तयोः ॥ १७ ॥
लग्नान्तरासवः कार्या रवीन्द्वोः षड्भयुक्तयोः ।
चेदेकराशावुभयोः कार्या विवरलिप्तिकाः ॥ १८ ॥
ताभ्यो नाड्यो हते ताभिर्द्युगती चन्द्रसूर्ययोः ।
षष्टिभक्ते ६० फले ताभ्यां संयुतौ चन्द्रभास्करौ ॥ १९ ॥
पुनः प्राग्वत् तयोः कार्या विवरप्राणसञ्चयाः ।
एवं यावत् स्थिरीभूताः कर्त्तव्या विवरासवः ॥ २० ॥
रवेरस्तमयाच्छुक्ले तैः प्राणैरस्तमेति हि ।
चन्द्रमाः कृष्णपक्षे तु सषड्भोऽर्को विधीयते ॥ २१ ॥
प्राग्वत् तयोश्च कर्त्तव्याः सुस्थिरा विवरासवः ।
सूर्यास्तादुदयं याति प्राणैस्तैः शशलाञ्छनः ॥ २२ ॥
अर्केन्द्वोर्विवरप्राणैः शुक्ले सूर्योदयाद्भवेत् ।

चन्द्रोदयमथास्तं स्यात् कृष्णे षड्भयुतेऽन्दुतः ॥ २३ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे
शृङ्गोन्नत्यधिकारो दशमः ॥ १० ॥

वामदेव उवाच ।

देवदेव मुनिश्रेष्ठ भक्तानुग्रहकारक ।
भवत्प्रसादात् सुज्ञातं ज्योतिषां चरितं महत् ॥ १ ॥
द्विधा कालं तु तन्मानं भग्रहाणां परिभ्रमम् ।
ग्रहाणामष्टधा ऋज्वी दृश्याऽदृश्या विधोः किल ॥ २ ॥
दिग्देशकालावगमो ग्रहणे चन्द्रसूर्ययोः ।
शृङ्गोन्नती शशाङ्कस्य तथा योगो नभोगयोः ॥ ३ ॥
अथातः श्रोतुमिच्छामि व्यतिपातं दयानिधे ।
कथमादौ तदुत्पत्तिः किं फलं स्नानदानतः ॥ ४ ॥
कोऽत्र भेदोऽथ वा ज्ञेयो वैधृतव्यतिपातयोः ।
कर्मणा केन साध्योऽसौ कथ्यतामखिलं गुरो ॥ ५ ॥

वसिष्ठ उवाच ।

साधु पृष्टं द्विजश्रेष्ठ पातं पुण्यतमाधिकम् ।
रहस्यं ज्योतिषां दिव्यं शृणुष्वैकाग्रमानसः ॥ ६ ॥
सूर्याचन्द्रमसोः क्रान्तिसाम्ययोः स्पर्शनाद्भवेत् ।
प्रवहप्रेरितस्तादृक्क्रोधोद्भूतो हुताशनः ॥ ७ ॥
तस्मादुत्पद्यते कोऽपि पुमानत्यन्तदुर्मुखः ।
स कृष्णो दारुणवपुर्लोहिताक्षो भयावहः ॥ ८ ॥

सर्वानिष्टकरः पुष्टो मुक्तकेशो महोदरः ।
एवंविधः समुद्भूतः संसारेऽयं समन्ततः ॥ ९ ॥
परिभ्रम्य निपत्यात्र विश्रम्यान्तर्हितो भवेत् ।
शुभमङ्गलकर्माणि लोकानां च विनाशयेत् ॥ १० ॥
स्नानदानादिकास्तत्र जपश्राद्धादिकाः क्रियाः ।
कदापि कुरुते मर्त्यः सुमहत् फलमश्नुते ॥ ११ ॥
सूर्यग्रहे कुरुक्षेत्रे कोटिस्वर्णार्पणे फलम् ।
तत् फलं लभते पाते स्नानश्राद्धजपादिना ॥ १२ ॥
उत्पाते लक्षगुणितं भ्रमणे कोटिसंगुणम् ।
पातेऽर्बुदगुणितं पतिते क्षतमक्षयम् ॥ १३ ॥
पातकालः सुदुर्ज्ञेयो ज्योतिःशास्त्रे द्विजोत्तम ।
किं दुर्ज्ञेयं सुगणकैर्गणितार्णवपारगैः ॥ १४ ॥
यः पातसंभवं वेद स वेद परमां गतिम् ।
यस्मिन् ज्ञाते तु सज्ज्ञानं पूर्णं ब्रह्म सनातनम् ॥१५॥
एकायने यदाऽर्केन्दू समे क्रान्ती तयोर्युतौ ।
चक्रे नाम्ना वैधृताख्यो ज्ञेयोऽसौ द्विजपुङ्गव ॥ १६ ॥
भिन्नायनावेकदिशौ तौ चेत् क्रान्ती समे तयोः ।
व्यतिपातस्तदा पातो भगणार्धे तयोर्युतौ ॥ १७ ॥
चक्रचक्रार्धतुल्ये वा किंयद्भागादिकोनके ।
सायनार्केन्दुयोगे चेत् तदा पातस्य संभवः ॥ १८ ॥

अथ चक्रार्धचक्रोनाधिकलिप्ता विभाजिताः ।
भुक्तियोगेन लब्धं यद्दिनादि गतगम्ययोः ॥ १९ ॥
तदाऽर्केन्द्वोः स्फुटक्रान्ती
साध्ये युग्मपदस्य च ।
विधोः क्रान्तौ रवेः क्रान्तेः
पातो भाव्यधिका यदि ॥ २० ॥
ऊना गतस्तदा ज्ञेयो
वाममोजपदस्य च ।
तत्क्रान्तिजीवे गुणिते
त्रिज्यया १००० च पृथक् पृथक् ॥ २१ ॥
परक्रान्तिज्यया५०४भक्ते तच्चापे च तदन्तरम् ।
चन्द्रे हीनं धनं कार्यं गतैष्ये पातसंभवे ॥ २२ ॥
तदन्तरांशगुणिता भानुभुक्तिर्विभाजिता ।
चन्द्रभुक्त्या धनर्णं स्याद्रवौ भागादि चन्द्रवत् ॥ २३ ॥
तद्वत् पातफलं ज्ञेयं देयं पाते विपर्ययात् ।
पुनः क्रान्ती तयोः साध्ये गतैष्यत्वं विचार्य च ॥ २४ ॥
पूर्ववच्चापविवरसंस्कृतेन्दुस्ततो रविः ।
पातः पुनस्तयोः क्रान्ती एवं यावत् समे भवेत् ॥ २५ ॥
क्रान्तिसाम्यं भवेच्चन्द्रेऽधिकोने चार्धरात्रिकात् ।
एष्योऽधिको वा पातोऽत्र तयोर्विवरलिप्तिकाः ॥ २६ ॥

षष्टि-६०निघ्ना हृताश्चन्द्रभुक्त्या लब्धाश्च नाडिकाः ।
ताभिर्गतैष्ये पातस्य मध्यकालोऽर्धरात्रिकात् ॥ २७ ॥

अथेष्टयातैष्यघटीभिरस्मा-
दर्केन्दुतः क्रान्तिकलाः प्रसाध्याः ।
दिगैक्यभेदे च तदन्तरैक्यं
हरौ भवेतां व्यतिपातयोगे ॥ २८ ॥

प्रावेशिको निर्गमकालिकश्च
तदन्यथा वैधृतपातयोगे ।
तन्मानयोगार्धकलाः पुराव-
दभीष्टनाडीगुणिता हराप्ताः ॥ २९ ॥

प्रवेशे निर्गमे पाते तयोः क्रान्त्यन्तरे सदा ।
मानयोगार्धतुल्यं स्याद्यामदेव द्विजोत्तम ॥ ३० ॥

तस्मात् तत्क्रान्तिविश्लेषं
तन्मानैक्यकलादलात् ।
यावन्न्यूनं हि तावत् स्यात्
क्रान्तिपातस्य संभवः ॥ ३१ ॥

संभूय विभ्रम्य निपत्य पूर्वं
विश्रम्य किञ्चित् पुनरुत्थितः सन् ।
पुनस्तथाऽऽभ्राम्य विनाशमेति
ह्येवं नरः कोऽपि शुभानि निघ्नन् ॥ ३२ ॥

यस्मिन् काले क्रान्तिसाम्ये रवीन्द्वो-
स्तस्मिन् काले संज्वलज्ज्वालजाले ।
स्नानं जप्यं प्राणिभिर्दत्तमत्र
तत्तज्ज्ञात्वा सर्वमक्षय्यमेति ॥ ३३ ॥
इत्येतत् परमं पुण्यं गुह्यमध्यात्मसंज्ञकम् ।
गोपनीयं प्रयत्नेन तवाग्रे कथितं मया ॥ ३४ ॥
एतच्छिष्याय शुद्धाय कालज्ञाय मनस्विने ।
कृतज्ञाय विनीताय दातव्यं च द्विजोत्तम ॥ ३५ ॥
मूर्खाय दुष्कुलीनाय तथा चानृतवादिने ।
कुपरीक्षितशिष्याय दातव्यं न कदाचन ॥ ३६ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे पाताधिकार एकादशः ॥ ११ ॥

वामदेवोऽथ तच्छ्रुत्वा हर्षप्रोत्फुल्ललोचनः ।
नत्वा प्रदक्षिणीकृत्योपविश्य च तदग्रतः ॥ १ ॥
कृताञ्जलिर्विनीतात्मा प्रत्युवाच पुनः स तम् ।
शान्तात्मानं सुखासीनं वसिष्ठं भक्तवत्सलम् ॥ २ ॥

वामदेव उवाच ।

गुरो कृपानिधे नाथ भक्तानुग्रहकारक ।
त्वत्प्रसादान्मया ज्ञातं ज्योतिषां चरितं महत् ॥ ३ ॥
अथातः श्रोतुमिच्छामि
ब्रह्माण्डं तत् कियन्मितम् ।

कथं मही कियन्माना
किमाकारा किमाश्रया ॥ ४ ॥
कथं नगसमुद्रैश्च वेष्टिता मुनिसत्तम ।
तस्यां विभागः कति च कुत्र पातालभूमयः ॥ ५ ॥
नक्षत्रग्रहकक्षाश्च स्थिताः केन क्रमेण च ।
कथं पर्येति भगवान् भानुर्भूमितमोऽन्तकृत् ॥ ६ ॥
किमर्थं मर्त्यलोके च नाडीषष्ट्यात्मकं दिनम् ।
पितृलोके दिनं चान्द्रमासेनापि कथं मुने ॥ ७ ॥
भानोर्भगणपूर्त्या च स्वर्लोकानां दिनं कथम् ।
मिथो देवासुराणां च कथं वाममहर्निशम् ॥ ८ ॥
याम्यगोले दिनं स्वल्पमुदग्गोले दिनं महत् ।
तदेव भिन्नदेशे च हीनाधिक्यं च तत् कथम् ॥ ९
वर्धते क्षीयते चन्द्रः कथं वा मुनिसत्तम ।
कथं तीक्ष्णकरो ग्रीष्मे रविर्हेमन्तकेऽन्यथा ॥ १० ॥
एतदन्यच्च यत्किञ्चित् कारणं कथ्यतां मुने ।
विचार्य सर्वं ब्रह्मर्षे सर्वदर्शिन् कृपां कुरु ॥ ११ ॥

श्रीवसिष्ठ उवाच ।

साधु पृष्टं महाभाग ज्योतिषां कारणं महत् ।
विस्तरेण प्रवक्ष्यामि शृणुष्वैकाग्रमानसः ॥ १२ ॥
यत्र ब्रह्म परं साक्षादव्यक्तं निर्गुणं चितिः ।
वासुदेवः स पुरुषः पञ्चविंशत्परोऽव्ययः ॥ १३ ॥

प्रकृत्यनादिसंयोगात् कदाचिज्ज्ञातकल्पनः ।
बहुः स्यामित्यतो जातः प्रकृत्याविष्टचेतनः ॥ १४ ॥
सङ्कर्षणोऽसौ सर्वस्थः सर्वज्ञः परमेश्वरः ।
प्रकृत्या जनयामास सृष्ट्यादौ हैममण्डकम् ॥ १५ ॥
तदन्तस्तमसा सर्वं व्याप्तं ब्रह्मवियोगतः ।
तत्रानिरुद्धः प्रथमं व्यक्तं चैतन्यमुच्यते ॥ १६ ॥
तमोपहः प्रकाशात्मा व्यक्तीभूतः सनातनः ।
पंप्रकृत्योः समीपस्थमण्डं हैमं प्रकाशयन् ॥ १७ ॥
हिरण्यगर्भो भगवांश्छन्दोभिः परिगीयते ।
आदित्योऽयं समाख्यातो जगतामादिभूर्यतः ॥ १८ ॥
प्रकृत्या सूर्य आख्यातः सविता तमसां परः ।
परं ज्योतिस्त्रिजगतां बाह्याभ्यन्तरभासकः ॥ १९ ॥
महानिति समस्तानामाश्रयाज्ज्ञानिजन्मनोः ।
ऋचोऽस्य मण्डलं सूक्ष्मं मूर्त्तिः सामयजुस्तथा ॥ २० ॥
कालात्मा कालकृत् सूक्ष्मः सर्वज्ञः सर्वभूतभृत् ।
रथे विश्वमयं चक्रं कृत्वा संवत्सरात्मकम् ॥ २१ ॥
सप्ताश्वसंयुतो विश्वं पर्य्येत्येष सदा वशी ।
ज्ञानध्यानयुजां पुंसां ब्रह्मान्तं ब्रह्मलोकदम् ॥ २२ ॥
जातस्तस्मादहंकारो ब्रह्मात्मा सृष्टिकृद्विभुः ।
तस्मै ददौ महान् देवो वरान् लोकपितामहः ॥ २३ ॥

तं प्रतिष्ठाप्याण्डमध्ये स्वयं पर्येति भासयन् ।
अहङ्कारान्मनो जज्ञे मनसश्चन्द्रमास्तथा ॥ २४ ॥
सूर्योऽच्चणस्तेजसां राशिः शान्तबुद्धिः प्रकीर्त्तितः ।
तमःप्रधानान्मनसः संजज्ञे पवनस्ततः ॥ २५ ॥
ततस्तेजो जलं तस्मात् पृथिवी जलतोऽभवत् ।
उत्तरोत्तरवृद्ध्या तु गुणा भूतेषु संश्रिताः ॥ २६ ॥
अग्नीषोमौ भानुचन्द्रौ भूतानि च कुजादयः ।
तेजोभूमिवियद्वारिवायुभ्यः क्रमशोऽभवन् ॥ २७ ॥
पुनर्द्वादशधाऽऽत्मानं चक्रे राशिस्वरूपिणम् ।
पुनर्नक्षत्ररूपेण सप्तविंशतिधाऽभवत् ॥ २८ ॥
तस्यैव मनसोत्पन्ना वयं सप्तर्षयो द्विज ।
ततो ब्रह्माऽसृजद्विश्वं ज्योतिश्चक्रं विरञ्च्य च ॥ २९ ॥
गुणकर्मविभागेन देवपूर्वं चराचरम् ।
बीजरूपं द्विजश्रेष्ठ पुरावत् तदनुक्रमात् ॥ ३० ॥
ततो ग्रहर्क्षताराणां भूगोलस्य तथा विभुः ।
सुरासुराणां मर्त्यानां नागानां च तथा स्थितिम् ॥ ३१ ॥
विभागं कल्पयामास यथास्वं वेददर्शनात् ।
ब्रह्माण्डेऽस्मिन् द्विजश्रेष्ठ तथाऽन्येषां पितामहः ॥३२॥
गोलाकृति तदण्डं च हैमं ब्रह्माण्डमुच्यते ।
तन्मध्ये परिधिर्ज्ञेया व्योमकक्षा द्विजोत्तम ॥ ३३ ॥

युगाङ्गाष्टाभ्रनागाभ्रा-
ख्विभूसप्तगजेन्दुभिः ।
योजनैः प्रयुतघ्नैश्च १८७१२०८०८६४०००००००
व्योमकक्षामितिः कृता ॥ ३४ ॥

तन्मध्ये करसंचारः सहस्रांशोर्द्विजोत्तम ।
भताराभ्रमणं तत्र तदधोऽधः खचारिणाम् ॥ ३५ ॥

शनीज्यभौमसूर्याणां शुक्रज्ञशशिनां क्रमात् ।
सिद्धविद्याधराणां च घनानां तदधो भ्रमः ॥ ३६ ॥

तन्मध्येऽथ महीगोलो व्योम्नि तिष्ठति निश्चलः ।
दधानः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ॥ ३७ ॥

अथ तत्परिधिर्ज्ञेयो गोऽक्षाभ्रशर-५०५९योजनैः ।
तत्कर्णश्च वियत्पूर्णरसभू-१६०० मितयोजनैः ॥ ३८ ॥

वियद्द्वाकाशवेदाब्धि-
नवाभ्रगजयोजनैः ८०९४४०० ।
तद्गोलकक्षेत्रफलं
कर्ण-१६००घ्नपरिधे-५०५९र्भवेत् ॥ ३९ ॥

भित्त्वा भूगोलकं मेरुरूर्ध्वेऽधश्च विनिर्गतः ।
तदूर्ध्वेऽस्मिन् सुराः सर्वे दैत्याश्चाधः स्थितास्तथा ॥ ४० ॥

भूगोलमध्यवलयाद्याम्ये स्याल्लवणार्णवः ।
ततो दुग्धार्णवो दध्नो घृतस्येक्षुरसस्य च ॥ ४१ ॥

मद्यस्य स्वादुनीरस्य सप्तैवं क्रमशोऽब्धयः।
यथोत्तरं च परिधिर्न्यूनस्तेषां क्रमाद्भवेत् ॥ ४२ ॥
लवणाब्धितटे सौम्ये नगर्यो देवनिर्मिताः।
भूमध्यवलये तस्मिन् प्राकारे व्यक्तसंज्ञके ॥ ४३ ॥
देवासुरविभागाख्ये चतस्रश्च द्विजोत्तम।
शोभिताः स्वर्णरत्नाद्यैः प्रकाराट्टालतोरणैः ॥ ४४ ॥
लङ्काभूमध्यवलये प्राच्यां बाणाङ्गभास्करैः १२६५।
ततो योजनसंघैश्च यमकोटिः स्थिता द्विज ॥ ४५ ॥
ततः प्राच्यां हि तावद्भिर्योजनैः १२६५ सिद्धपत्तनम्
वसन्ति तत्र सिद्धाश्च महात्मानो गतव्यथाः ॥ ४६ ॥
ततः प्राच्यां हि तावद्भिर्योजनैः १२६५ रोमपत्तनम्
रोमपत्तनतो लङ्का तावद्भिर्योजनैः स्थिता ॥ ४७ ॥
प्राच्यामेव हि ताभ्यश्चोत्तरो मेरुः सुरालयः।
तावद्भिर्योजनैर्याम्ये सुमेरुर्दानवालयः ॥ ४८ ॥
तदधो नरकाः स्वादुनीराब्धौ वडवानलः।
एवं भूवृत्तपादेन षट् स्थानानि निरन्तरम् ॥ ४९ ॥
लङ्कातः समसूत्रे च तदधः सिद्धपत्तनम्।
तथैव सिद्धनगराद्यमकोटिरधः स्थिता ॥ ५० ॥
अथात्मानं भूपरिस्थं मन्यन्ते च सुरासुराः।
नागराः समसूत्रस्थास्तदधश्च परस्परम् ॥ ५१ ॥

अथ मेषतुलादिस्थस्तासामुपरिगो रविः ।
भ्रमत्यतो न तत्रास्ति मध्यच्छाया द्विजोत्तम ॥ ५२ ॥
व्यक्षदेशस्थितैर्मर्त्यैर्ध्रुवतारे समीक्षिते ।
वामदेत्रोभये साक्षात् सौम्ययाम्यध्रुवाश्रिते ॥ ५३ ॥
अतो निरक्षदेशे च नाक्षांशा न पलप्रभा ।
लम्बकांशाश्च नवतिर्भवन्ति द्विजसत्तम ॥ ५४ ॥
सुरासुराणामुभये ध्रुवतारे खमध्यगे ।
तत्राक्षांशाश्च नवतिर्लम्बांशाः पूर्णमेव हि ॥ ५५ ॥
भ्रमत्यजस्रं वियति ज्योतिश्चक्रं ध्रुवाश्रितम् ।
प्रवहानिलबद्धं च जलयन्त्रमिव द्विज ॥ ५६ ॥
निरक्षदेशतः सौम्ये नरो याति यथा यथा ।
तथा तथा ध्रुवः सौम्यः क्षितेरुच्चगतो भवेत् ॥ ५७॥
याम्यध्रुवस्तथैव तथा याम्यभूवलयादधः ।
एवं याम्ये नरो याति यथा याम्यध्रुवोच्छ्रितिम् ॥ ५८॥
ध्रुवोन्नतिवशादेव देवभागे पलांशकाः ।
तद्धीना नवतिर्याम्या लम्बकांशा द्विजोत्तम ॥ ५९ ॥
तथैव दैत्यभागे च सौम्या याम्यध्रुवोच्छ्रितेः ।
अक्षांशा लम्बकांशाश्च भवन्ति द्विजसत्तम ॥ ६० ॥

अभीष्टयोजनाभ्यस्ता
नवति-९०श्च विभाजिता ।

८॥

भूवृत्तपादे-१२६५ रसांशा
वामं स्युर्योजनानि च ॥ ६१ ॥
जम्बूद्वीपो भुवोऽर्धं य-
दुदक्स्थं लवणार्णवात् ।
अर्धेऽन्यस्मिन् याम्यभागे
द्वीपाः स्युः शाकपूर्वकाः ॥ ६२ ॥

शाकं च शाल्मलं कौशं क्रौञ्चं गोमेदकं क्रमात् ।
पुष्करं चेति विज्ञेयं द्वयोर्मध्ये समुद्रयोः ॥ ६३ ॥
सौम्यभागे द्विजश्रेष्ठ लङ्कातो हिमपर्वतः ।
हेमकूटगिरिस्तस्मात् ततो निषधपर्वतः ॥ ६४ ॥
यमकोटिरुदग्ज्ञेयो माल्यवानचलो द्विज ।
गन्धमादननामागः सौम्यो रोमकपत्तनात् ॥ ६५ ॥
सिद्धपत्तनतश्चैव शृङ्गवान् पर्वतस्ततः ।
शुक्लाचलस्ततो नीलपर्वतश्चोत्तरे स्थितः ॥ ६६ ॥
लङ्काहिमागयोर्मध्ये वर्षं भारतसंज्ञकम् ।
हिमागहेमकूटान्तः किन्नरं वर्षमीरितम् ॥ ६७ ॥
हरिवर्षं द्विजश्रेष्ठ हेमकूटनिषाधयोः ।
माल्यवद्यमकोट्योश्च वर्षं भद्रतुरङ्गमम् ॥ ६८ ॥
केतुमालाभिधं रोमगन्धमादनयोर्द्विज ।
सिद्धशृङ्गवतोर्मध्ये कुरुवर्षं महामते ॥ ६९ ॥

शृङ्गवच्छुक्लयोर्मध्ये हिरण्याख्यं समीरितम् ।
वर्षं सुरम्यकाख्यं च मध्ये यच्छुक्लनीलयोः ॥ ७० ॥
माल्यवन्नीलनिषधगन्धमादनभूभृताम् ।
मध्ये यदत्र विज्ञेयं नाम्ना वर्षमिलावृतम् ॥ ७१ ॥
तत्र देवाः सगन्धर्वाः सन्ति स्वर्णमयी मही ।
तन्मध्ये गिरिराजोऽयं पद्मस्य कर्णिकाकृतिः ॥ ७२ ॥
नाम्ना सुमेरुर्विख्यातो नानारत्नविभूषितः ।
द्विज हैममयो भव्यः स तु सिद्धसुरालयः ॥ ७३ ॥
अथास्य विष्कम्भनगाः सुगन्धो मन्दराचलः ।
विपुलाख्यः सुपार्श्वश्च चत्वारस्तेषु भूरुहाः ॥ ७४ ॥
उत्पन्नाः क्रमशो जम्बूकदम्बवटपिप्पलाः ।
महाजम्बूनदी जाता जम्बूफलगलद्रसात् ॥ ७५ ॥
तद्युक्ता स्वदभूत् स्वर्णं तद्रसं चामृताधिकम् ।
पिबन्ति सुरसिद्धौघा अमृते च पराङ्मुखाः ॥ ७६ ॥
नन्दनाख्यं चित्ररथं धृतिसंज्ञं वनं तथा ।
वैभ्राजमिति तत्र स्युश्चत्वारि क्रमशो द्विज ॥ ७७ ॥
मानसं च सरस्तत्रारुणाख्यं च महाह्रदम् ।
शुभ्रवारीति चत्वारि सरांसि क्रमतो द्विज ॥ ७८ ॥
सद्रत्नकाञ्चनमये सुमेरोः शिखरत्रये ।
ब्रह्मविष्णुशिवस्थानान्यधस्तेभ्यो दिगधिपाः ॥ ७९ ॥

शतक्रतुश्च ज्वलनो यमो रक्षोऽम्बुपो मरुत् ।
शशीशश्चेति पतयः पूर्वादीनां दिशां क्रमात् ॥ ८० ॥

अथ श्रीविष्णुचरणाद्विष्णुपादोदकी च्युता ।
विष्कम्भाचलतो मेरौ चतुर्धाऽस्मादृद्विजोत्तम ॥ ८१ ॥
भद्राश्ववर्षे शीताख्या चक्षुः स्यात् केतुमालके ।
भारतेऽलकनन्देयं कुरुवर्षे च भद्रिका ॥ ८२ ॥

ऐन्द्रं कसेरुसंज्ञं च ताम्रपर्णं गभस्तिमत् ।
कुमारिकाख्यं नागं च सौम्यं वारुणसंज्ञकम् ॥ ८३ ॥
गान्धर्वमिति खण्डानि नव ज्ञेयानि भारते ।
कुमारिकाख्ये खण्डेऽस्मिन् स्थिता वर्णव्यवस्थितिः ॥ ८४ ॥
माहेन्द्रशुक्तिमलया ऋक्षकः परियात्रकः ।
सह्याचलो विन्ध्यगिरिरिह सप्तकुलाचलाः ॥ ८५ ॥

अथ सूर्योदयो यत्र तत्र पूर्वा दिगीरिता ।
अस्तं यात्यपरा तत्र तन्मत्स्यादखिला दिशः ॥ ८६ ॥
तस्मात् सुरालयो मेरुः सौम्यदिक्स्थः सदा स्थितः ।
सर्वेषां याम्यभागस्था ऊर्वे नरकदानवाः ॥ ८७ ॥

साक्षात् प्राची तु यत्र स्यादुदयो विषुवद्दिने ।
यत्रास्तं पश्चिमा सा तु तन्मत्स्येभ्योऽखिला दिशः ॥ ८८ ॥

यदा लङ्कापुरे भानोरुदयो भवति द्विज ।
मध्याह्नो यमकोट्यां च सूर्यास्तं सिद्धपत्तने ॥ ८९ ॥

रात्र्यर्धं रोमके देशे तदा भवति सुव्रत ।
एवं भ्रमति चण्डांशुर्दिनरात्रिं विभावयन् ॥ ९० ॥
सूर्यस्यादर्शनं रात्रिर्दिनं तद्दर्शनात्मकम् ।
भूजद्वृत्तादुपरि च स्थितोऽर्को दर्शनं स्मृतम् ॥ ९१ ॥
भूगोलान्तःपुटे सप्त रम्याः पातालभूमयः ।
तत्र नागासुराः सिद्धा निवसन्ति द्विजोत्तम ॥ ९२ ॥
न भानुकरसंचारस्तत्रोद्द्योतस्तु जायते ।
नागानां मणितेजोभिर्दिव्यौषधिरसोदयः ॥ ९३ ॥
निरक्षविषये भानुः क्रान्त्यंशैर्दक्षिणोत्तरे ।
खस्वस्तिकान्नतस्तेन हीना नवतिरुन्नतः ॥ ९४ ॥
अथ साक्षेऽपमांशाक्षविश्लेषाद्युतितो रविः ।
नतो भवति शीर्षाच्च तद्दिग्भेदे समे क्रमात् ॥ ९५ ॥
परक्रान्तिमितेऽक्षांशे भुवः पञ्चदशे लवे ।
सौम्ययाम्यायनान्तेऽर्को देवासुरविभागयोः ॥ ९६ ॥
खस्वस्तिकगतो ज्ञेयस्तन्मध्ये च रवेर्विभा ।
याम्योत्तरा स्यादपमांशमितेऽक्षे खमध्यगः ॥ ९७ ॥
सर्वत्रैव महीगोले स्वस्थानमुपरि स्थितम् ।
मानवा मुनयः सिद्धा मन्यन्ते च सुरासुराः ॥ ९८ ॥
सहाशीत्या शतं १८० व्योमभागानां यान्ति दृक्पथम् ।
सर्वेषामसुराणां सुराणां च तथा नृणाम् ॥ ९९ ॥

सर्वत्र विषुवद्भानु-
ध्रुवयोरन्तरं सदा ।
नवत्यंशा ९० उदक्क्रान्तौ
षट्षष्ट्यं-६६ शान्तरं परम् ॥ १०० ॥

याम्येऽथ परमक्रान्तावन्तरं ध्रुवसूर्ययोः ।
वेदभूभूमि-११४ भागाश्च सर्वदेशे द्विजोत्तम ॥ १०१ ॥
यस्माद्यथा यथा सौम्ये नरो याति तथा तथा ।
ध्रुवौच्चयं सौम्यतारौच्च्यं याम्यतारकनीचता ॥ १०२ ॥
षट्षष्टिभागाद्ये देशे सौम्ययाम्यायनान्तरे ।
भ्रमन्तं तरणिं पश्येद्ध्रुवस्य परितो द्विज ॥ १०३ ॥
यावत् षष्टिघटीस्तत्र तस्मात् षष्टिघटीदिनम् ।
तथा याम्यायनान्तेऽर्को भूजहत्तादधःस्थितः ॥ १०४ ॥

यतः षष्टिघटीर्याव-
त्तस्तत्र निशा मता ।
नाडीषष्टिमिताऽन्यस्मिन्
दिने वृद्धिक्षयौ तथा ॥ १०५ ॥

तत्रापि विषुवद्भानौ
नाडीत्रिंशद्दिनं भवेत् ।
मेषान्तेऽर्के सपादं च
गोऽग्नि-३९।१५ नाडीमितं दिनम् ॥ १०६ ॥

वृषान्ते दिनमानं च
नाडिकाः सप्त सागराः ४७ । ३८ ।
तत्रैव च द्विजश्रेष्ठ
अष्टत्रिंशत् पलानि च ॥ १०७ ॥
रसाङ्गाद्यान्तरालोऽक्षोरात्रं षष्टिघटीमितम् ।
सौम्ययाम्ये तदग्रेऽस्ते दिनरात्रिविचित्रता ॥ १०८ ॥
निरक्षाद्बाणसप्ताङ्क-९७५
योजने विषये द्विज ।
भवन्ति पलभागाश्च
सत्र्यंशा नन्दरासभाः ६६ । २० ॥ १०९ ॥
तत्रार्को देवभागे च धनुर्मकरसंस्थितः ।
न दृश्यते दैत्यभागे मिथुने कर्कटे स्थितः ॥ ११० ॥
निरक्षात् खखभूचन्द्र-
योजने विषये तथा ।
साङ्घ्रिसपाद्रयो-७८ । १५
ऽक्षांशास्तत्र भानुर्न दृश्यते ॥ १११ ॥
देवभागे स्थितो वृश्चिकादिराशिचतुष्टये ।
तथैवासुरभागे च वृषाद्ये भचतुष्टये ॥ ११२ ॥
अथ मेरौ भचक्रार्धे मेषादेर्भास्करं सुराः ।
सव्यं भ्रमन्तं पश्यन्ति सकृदेवोदितं द्विज ॥ ११३ ॥

तुलादेश्च भचक्रार्धं न पश्यन्ति तथा रविम् ।
सकृदेवोदितं दैत्या भ्रमन्तमपसव्यगम् ॥ ११४ ॥
मेषादौ च सुराः सर्वे पश्यन्त्यर्धोदितं रविम् ।
तदाऽर्धास्तमितं दैत्यास्तुलादौ च विपर्ययः ॥ ११५ ॥
विपर्ययाद्दतस्तेषामहोरात्रं भवेद्द्विज ।
सौरवर्षमितं तत् स्याद्दिनरात्रिदलेऽयने ॥ ११६ ॥
विषुवेऽथ दिने कुज्याभावः सूर्योदयं यतः ।
साक्षात् प्राच्यामन्यदिने ह्युदयः कुज्यकावशात् ॥ ११७ ॥
मेषादेः प्रत्यहं सूर्यो भ्रमत्युत्तरसञ्चरात् ।
व्याघुट्य कर्कटादेश्च दक्षिणाभिमुखं गतः ॥ ११८ ॥
भ्रमत्युत्तरगोलेऽथ तुलादेर्दक्षिणां चरन् ।
भ्रमत्येवं मृगादेश्च व्याघुट्यार्को ह्युदङ्मुखः ॥ ११९ ॥
अत्र क्रान्तिवशादेवं दिनरात्रिमितिर्भवेत् ।
यथोत्तरं रवियाति दिनवृद्धिस्तथा भवेत् ॥ १२० ॥
रात्रेर्ह्रासोऽथ वा याम्यमर्को याति यथा ।
दिनह्रासो निशावृद्धिः प्राच्यां दिननिशे समे ॥ १२१ ॥
देवभागे दिननिशोः क्षयवृद्धी यदा तदा ।
वृद्धिक्षयौ दिननिशोर्दैत्यभागे द्विजोत्तम ॥ १२२ ॥
ग्रीष्मर्तौ निकटे भानुरायाति द्विजसत्तम ।
यतोऽतो देवभागेऽत्र ग्रीष्मे तीव्रकरो रविः ॥ १२३ ॥

हेमन्ते दूरगो याति मन्दरश्मिरतस्तथा ।
दैत्यभागे तीव्रकरो ग्रीष्मे मन्दकरो भवेत् ॥ १२५ ॥

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे भूगोलाधिकारो द्वादशः ॥ १२ ॥

वसिष्ठ उवाच ।

अथ भूगोलतः (१)पूर्णाङ्क-
रसवारिधिभूगजाः ८१४६९० ॥ ३ ॥
चन्द्रोच्चस्य युगाष्टाब्धि-
गजदन्ताष्टवह्नयः ३८३२८४८४ ।
बृहस्पतेर्युगाङ्काद्रि-
पञ्चाद्रिगुणभूशराः ५१३७५७९४ ॥ ४ ॥
राहोर्वेदाङ्गनागाश्वि-
सप्तबाणवियद्गजाः ८०५७२८६४ ।
शनेः पञ्चशराश्व्यष्ट-
रसषट्खगभास्कराः १२७६ ६८ २५५ ॥ ५ ॥
नक्षत्राणां तदूर्ध्वे च
स्थिता कक्षा द्विजोत्तम ।

(१) इतोऽग्रे सार्धश्लोकद्वयस्य पुस्तकद्वयेऽपि त्रुटिरस्ति । यत्र चन्द्रस्य बुधशुक्रयोः शीघ्रोच्चस्य सूर्यस्य च कक्षामानं ततो भौमस्य कक्षामाने चावेव नवाङ्कपर्यायस्य त्रुटिः । 'पूर्णाङ्केत्यादिनवत्रुटिताङ्का एते भौमकक्षामानमिति विज्ञेयम् ।

यमभूवियदभ्राङ्क-
गजाङ्कशरदोर्मिता २५९८९००१२ ॥ ६ ॥
तदूर्ध्वं व्योमकक्षा स्याद्ब्रह्माण्डं तन्निगद्यते ।
भानामन्यतमस्यापि चोर्ध्वे वाऽधः स्थिता द्विज ॥ ७ ॥
चन्द्रस्य भगणाः कल्पे गुणिताः शशिकक्षया ।
आकाशकक्षा सा ज्ञेया करव्याप्तिस्तथा रवेः ॥ ८ ॥
आकाशकक्षा विहृता यत्कल्पभगणैः फलम् ।
तत्तत्कक्षा भवन्तीह सुमते योजनात्मिकाः ॥ ९ ॥
षष्ट्या विनिहता भानोः कक्षा भानां भवेदिह ।
ऊर्ध्वस्थितस्य महती कक्षाऽल्पाऽधःस्थितस्य च ॥ १० ॥
शीघ्रं च भगणान् भुङ्क्ते खेचरः कक्षयाऽल्पया ।
महत्या कक्षया भुङ्क्ते चिरेण भगणान् ग्रहः ॥ ११ ॥
द्विजश्रेष्ठ नभःकक्षा
१८७१२०८०८६४०००००००
विभक्ता कल्पभूदिनैः
१५७७९१७८२८००० ।
व्रजन्त्यनुदिनं खेटाः
प्रागाप्तैर्योजनात्मकैः ११८५८४३ ॥ १२ ॥
तद्योजनाहता चन्द्र-
कक्षा ३२४००० भक्ता स्वकक्षया ।

लब्धिः पञ्चदशाप्ता च
 स्वस्वप्राग्गतिलिप्तिकाः ॥ १३ ॥
मह्नीकर्ण१६००गुणा कक्षा
 मह्नीपरिधि-५०५८ना हृता ।
तत्कर्णः स्यात् तथाऽसौ भू-
 कर्णेनोनो दलीकृतः ॥ १४ ॥
तद्ग्रहौच्च्यं महीपृष्ठाद्-
 विज्ञेयं द्विजसत्तम ।
चन्द्रस्य कक्षाव्यासः स्या-
 च्चन्द्राद्रिजिनदिग्मितः १०२४७१ ॥ १५ ॥
बुधोच्चस्याब्धिरामाङ्क-
 नवनेत्राग्नि-३२९९३४ योजनः ।
सूर्यस्य तिथिनन्दाङ्क-
 रसरामैकयोजनः १३६९९१५ ॥ १६ ॥
भौमस्य पर्वताद्यङ्क-
 रससप्ताब्दोर्मितः २५७६९५७ ।
गुरोर्भास्करपञ्चाष्ट-
 जिनभूपति-१६२४८५१२ योजनः ॥ १७ ॥
कक्षाव्यासो भृगोर्नन्द-
 गुणभाब्धिगजास्तथा ८४२७३९ ।

चन्द्रोच्चस्य युगागाभ्र-
दोर्यमैकार्कं-१२१२२०७४ संमितः ॥ १८ ॥

पातस्य कुयमाङ्काब्धि-
गजवेदशराश्विनः २५४८२६२१ ।

शनेर्गजगजाग्न्यद्रि-
नगरामखसागराः ४०३७७३८८ ॥ १९ ॥

भानां वेदाभ्रनन्दाब्धि-
नवभूयमपन्नगाः ८२१९४९०४ ।

योजनान्युदितानीह
कक्षाव्यासस्य सुव्रत ॥ २० ॥

खवेदवेदाब्धिरसाङ्कषट्क-
गजाभ्रदेवाभ्रगजैकगोऽङ्काः५९१८०३३०८६६६४४४० ।
ब्रह्माण्डभाण्डोदरयोजनानि
कक्षाश्रुतेर्वा नभसो भवन्ति ॥ २१ ॥

आकाशकक्षा१८७१२०८०८६४०००००दिनइन्दनिघ्नी
भक्ता च कल्पोद्भवभूदिनेन १५७७९१७८२८००० ।
लब्धानि च प्राग्गतियोजनानि
हृतानि तानि स्वककक्षयाऽतः ॥ २२ ॥

भवन्ति वा भास्करपूर्वकास्ते
मध्यग्रहा एवमपि प्रसाध्याः ।
मन्दोच्चपातांश्च विधाय तेषां
पूर्वं हि कक्षाभिधयोजनानि ॥ २३ ॥
खेचराः स्वस्वकक्षायां भ्रमन्तोऽपि द्विजोत्तम ।
प्राक् चरन्तः प्रतिदिनं लभन्ते तुल्यमेव हि ॥ २४ ॥
कक्षावशेनैव नभश्चरस्य
भिन्ना गतिः स्यादिति यस्य चाल्पा ।
बह्वी गतिर्वा महती च कक्षा
यस्याल्पिका तस्य गतिः प्रदिष्टा ॥ २५ ॥
अतः शनेरल्पगतिर्निरुक्ता
चन्द्रस्य कक्षाल्पवशाच्च बह्वी ।
भचक्रपूर्त्तिं महताऽल्पगामी
चाल्पेन कालेन व्रजेत शीघ्रगः ॥ २६ ॥
नक्षत्रकक्षाभ्रमणं च चक्र-
प्राणात्मकं२१६००तन्नियतं निरुक्तम् ।
तदेव सूर्यादिनभश्चराणां
स्वमध्यभुक्तिभ्रमणं निरुक्तम् ॥ २७ ॥

सू. २१६५८ । ८ । चं. २२३८० । २५ । मं. २१६३१ । २६ ।
बु. २१६५८ । ८ । बृ. २१६०५ । शु. २१६५८ । ८ । श. २९६०२ ।

सायनं तदहोरात्रं सूर्यादेरसुसञ्चयम्
ज्ञेयं मध्यममानेन वामदेव द्विजोत्तम ॥ २८ ।

इति श्रीब्रह्मर्षिवृद्धवसिष्ठप्रणीते गणितस्कन्धे विश्वप्रकाशे
ग्रहकक्षाध्यायस्त्रयोदशः ॥ १३ ॥

समाप्तोऽयं वृद्धवसिष्ठसिद्धान्तः ।



Printed by Krishna Das Gupta Proprietor, at the
Benares Printing Press.

# विज्ञापनम् ।

## बनारससंस्कृतसीरीज् अर्थात् वाराणसीसंस्कृतपुस्तकमाला ।

इयं पुस्तकमाला खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमा ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्येऽपि विद्वांसः शोधयन्ति । ये च पुस्तकमालारम्भखण्डाद् ग्राहकास्तैः प्रत्येकखण्डस्य मूल्यम् ।।) अष्टौ आनका देयाः । ये चान्ये ग्राहकाः मध्यस्थानि कानिचित् खण्डानि ग्रन्थमेकं वा गृह्णन्ति ते निम्नलिखितमूल्येन प्राप्स्यन्ति । यैर्महाशयगणैश्चेदत्र बहूनि पुस्तकानि संग्राह्याणि तैर्यथोचितसुलभमूल्येन तानि प्राप्यन्ते । विशेषवृत्तानि पत्रव्यवहारतो ज्ञेयानि ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | | |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | १५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ८ |
| तन्त्रवार्त्तिकम् खण्डानि १३ | ३० | ० |
| तन्त्रवार्त्तिकावशेषः टुप्टीका खण्डानि ४ | ४ | ० |
| कात्यायनमहर्षिप्रणीतशुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीका—गौडपादभाष्यसहिता | ० | १२ |
| वाक्यपदीयम् खण्डानि ६ (प्रथमभागे प्रथमद्वितीयकाण्डे पुण्यराजटीकासहिते खण्डानि ३ । द्वितीयभागे तृतीयकाण्डम् हेलाराजटीकासहितं खण्डानि ३) | ६ | ० |
| रसगङ्गाधरः सटीकः खण्डानि ८ | ३ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| पाणिन्यादि ३२ शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः सटीका खण्डानि ४ | २ | ० |
| शुक्लयजुस्सर्वानुक्रमसूत्रं महर्षिकात्यायनप्रणीतं सभाष्यम् | ४ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यं खण्डानि ४ | ४ | ० |
| बृहद्वैयाकरणभूषणम् । पदार्थदीपिकासहितं खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः । सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

| | | |
|---|---|---|
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः । श्रीभगवद्रामानुजाचार्यविरचितः खण्डानि ३ | ३ | ० |
| पातञ्जलदर्शनं । श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्तिसहि० | १ | ० |
| व्याकरणमिताक्षरा । श्रीमदन्नंभट्टप्रणीता खण्डानि १० | १० | ० |
| रसमञ्जरी । व्यङ्ग्यार्थकौमुद्या प्रकाशेन च सहिता ख० ३ | ३ | ० |
| भेदधिक्कारः । व्याख्यासहितः श्रीमदप्पयदीक्षितकृतोपक्रम-पराक्रमसहितः खण्डे २ | २ | ० |
| बोधसारो नरहरिकृतः । तच्छिष्यदिवाकरकृतटीकया सहि० | १० | ० |
| ब्रह्मसूत्रदीपिका । श्रीमच्छङ्करानन्दभगवद्भिः रचिता खण्डे २ | २ | ० |
| दैवज्ञकामधेनुः । प्राचीनज्यौतिषग्रन्थः खण्डानि ३ | ३ | ० |
| श्रीमदणुभाष्यम् । श्रीवल्लभाचार्यविरचितम् । श्रीपुरुषोत्तमजीमहा-राजविरचितभाष्यप्रकाशाख्यव्याख्यासमेतं खण्डानि १५ | १५ | ० |
| तत्त्वशेखरः । तथा तत्त्वत्रयचुलुकसंग्रहः | १ | ० |
| श्रीभाष्यवार्त्तिकम् । श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्र-तिपादनपरम् । यतीन्द्रमतदीपिका च । खण्डे २ | २ | ० |
| गूढार्थदीपिका । श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायाः निवृत्तिपरा व्याख्या । भ्रमरगीतव्याख्या च खण्डानि ४ | ४ | ० |
| आश्वलायनसूत्रप्रयोगदीपिका । मञ्जुनाचार्यभट्टविरचिता | २ | ० |
| काव्यालङ्कारसूत्राणि । आचार्यवामनविरचितवृत्तिसमेतानि कामधेनुसमाख्यव्याख्यासहितानि खण्डे २ | २ | ० |
| अत्यन्तसुरद्रुमः । श्रीपुरुषोत्तमप्रसादविरचितः खण्डानि ३ | ३ | ० |
| चतुर्विंशतिमतसंग्रहव्याख्या । श्रीभट्टोजिदीक्षितसंकलिता | २ | ० |
| श्रीविद्वन्मण्डनम् । श्रीविट्ठलनाथदीक्षितविरचितम् । गोस्वामिश्री-पुरुषोत्तमजीविरचितसुवर्णसूत्राख्यव्याख्यासहितं खण्डे२ | २ | ० |
| सांख्यायनगृह्यसङ्ग्रहः । पण्डितवरवासुदेवविरचितः । | १ | ० |
| महासिद्धान्तः । आर्यभटाचार्येण विरचितः । म० श्रीसुधाकर-द्विवेदिकृतटीकासहितः । खण्डानि ३ | ३ | ० |
| न्यायलीलावती । न्यायाचार्यश्रीवल्लभविरचिता । खण्डं १ | ० | ८ |
| ज्यौतिषसिद्धान्तसंग्रहः तत्र सोमसिद्धान्तो ब्रह्मसिद्धान्तो पितामह-सिद्धान्तो वृद्धवसिष्ठसिद्धान्तश्च खण्डे २ | २ | ४ |

**व्रजभूषण दास और कम्पनी**

**नं० ४० । ५ ठठेरी बाज़ार, बनारस सिटी ।**

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

G. THIBAUT, PH. D, C. I. E. &c. &c.

*No. 152.*

# ज्यौतिषसिद्धान्तसंग्रहः ।

तत्र

## सोमसिद्धान्तः, ब्रह्मसिद्धान्तश्च ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्षेण

पण्डितविन्ध्येश्वरीप्रसादद्विवेदिना संस्कृतः ।

# JYAUTISHA SIDDHÁNTA SANGRAHA;

A COLLECTION OF

**ANCIENT HINDU ASTRONOMICAL WORKS.**

SOMASIDDHÁNTA & BRAHMASIDDHÁNTA

EDITED BY

PANDIT VINDHYEŚVARÍ PRASÁD DVIVEDI,

**LIBRARIAN, GOVT. SANSKRIT COLLEGE, BENARES.**

Fasciculus I.

*BENARES:*

PUBLISHED BY BRAJ BHUSHAN* DAS & Co.,

**C. K. 40/5 Thatheri Bazar, Near the Chauk,**

Subject matter printed by KRISHNA DAS GUPTA at the Benares Printing Press.

*AND COVER*

**Printed by GAURI SHANKER LAL, at Chandraprabha Press, Benares.**

1912.



*Formerly the publisher's name was put down in the abstract form "BRAJ B. DAS & Co.," but now the full name is given *i. e.* "BRAJ BHUSHAN DAS & Co.," so the customers are requested not to take it as another firm altogether.

ॐ नमः परमात्मने ।

# ज्योतिषसिद्धान्तसंग्रहस्य

## भूमिका ।

पाणिनीयशिक्षायाम् ।

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥"

वेदाङ्गज्योतिषे च ।

"वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ॥
यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद् वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम् ॥"

ऋग्वेदीयचरणव्यूहपरिशिष्टे शौनकेनोक्तम् ।

"लक्षं तु चतुरो वेदा लक्षमेकं तु भारतम् ।
लक्षं व्याकरणं प्रोक्तं चतुर्लक्षं तु ज्योतिषम् ॥"

इत्यनेन वेदाङ्गेषु चतुर्लक्षश्लोकात्मकज्योतिषशास्त्रस्य प्राधान्यात् तदन्वेषणे प्रवृत्तेन मया नारदसंहितारम्भे दृष्टम् ।

"ब्रह्माऽऽचार्यो वसिष्ठोऽत्रिर्मनुः पौलस्त्यलोमशौ ।
मरीचिरङ्गिरा व्यासो नारदः शौनको भृगुः ॥
च्यवनो यवनो गर्गः कश्यपोऽथ पराशरः ।
अष्टादशैते गम्भीरा ज्योतिःशास्त्रप्रवर्तकाः ॥
सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमिहोच्यते ॥
अस्य शास्त्रस्य सम्बन्धो वेदाङ्ग इति धातृतः ।
अभिधेयं च जगतः शुभाशुभनिरूपणम् ॥" इति ।

तथा कश्यपेनोक्तम् ।

"सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः ।
शौनकोऽष्टादशाश्चैते ज्योतिःशास्त्रप्रवर्तकाः ॥" इति ॥

एवं पराशरेणाप्युक्तम् ।

"विश्वसृड्नारदो व्यासो वसिष्ठोऽत्रिः पराशरः ।
लोमशो यवनः सूर्यश्च्यवनः कश्यपो भृगुः ॥
पुलस्त्यो मनुराचार्यः पौलिशः शौनकोऽङ्गिराः ।
गर्गो मरीचिरित्येते ज्ञेया ज्योतिःप्रवर्तकाः ॥" इति ॥

अत्र नारदवचनेषु "ब्रह्माऽऽचार्य" इत्यनेन ब्रह्मा पितामहो ग्राह्यः "ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" इत्यमरकोशात् । आचार्यपदेन च बृहस्पतिः ।

"देवाचार्यः सुराचार्यो नीतिज्ञो नीतिकारकः ।
गुरुर्जीवोऽथ वागीशो वेदवेदाङ्गपारगः ॥
सौम्यमूर्त्तिः सुधादृष्टिः पीतवासा बृहस्पतिः ॥"

इति पुराणाद् बृहस्पतिसंहितोपलम्भाच्च। तस्मादष्टादशा एव ज्योतिःशास्त्रप्रवर्तका इति सिद्धम्॥

कश्यपवचनेषु पौलिशशब्देन नारदोक्तपुलस्त्यस्य ग्रहणान्नाष्टादशत्वव्याघातः किन्तु निर्दिष्टनारदवचनेषु सूर्यस्यानुक्तत्वाद् ब्रह्मा सूर्यो वसिष्ठोऽत्रिरिति पाठान्तरं वदन्ति केचित् तच्चिन्त्यम्॥

पराशरवचनेष्वपि आचार्यपदोपादानात् पूर्वोक्तरीत्या बृहस्पतिरेव एवं विश्वसृग् ब्रह्मैव "ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः।—विधाता विश्वसृड् विधिः" इत्यमरकोशाद् अत्र सूर्यस्योपादानात् पुलस्त्यपौलिशयोः पार्थक्येनोपादानाच्च विंशतिराचार्या ज्योतिःशास्त्रप्रवर्तका इति निष्पन्नं भवति इदं च मतान्तरमिति सर्वं समञ्जसम्॥

ततश्च सिद्धान्त—संहिता—होरा—रूपस्कन्धत्रयात्मके(१) ज्योतिःशास्त्रे सूर्यसिद्धान्त—सोमसिद्धान्त—ब्रह्मसिद्धान्त(२)—वसिष्ठसिद्धान्त(३)—लोमशसिद्धान्त(४)—व्याससिद्धान्त—भृगुसिद्धान्त—पराशरसिद्धान्त—पुस्तकानि प्राप्तानि। अपि च ब्रह्मसं-

---

(१) सिद्धान्तलक्षणं संहितालक्षणं होरालक्षणं च आर्यभटीयलघुसिद्धान्ते प्रतिपादितम्।

(२) ब्रह्मसिद्धान्तस्त्रिविधः प्रथमस्त्वयमेव मुद्रितः। द्वितीयस्तु पितामहसिद्धान्तनाम्ना विष्णुधर्मोत्तरपुराणे प्रतिपादितः स चानुपदमेव प्रकाशितो भविष्यति यश्च सिद्धान्ततत्त्वविवेके कमलाकरभट्टेन भृशमुपपादितः। तृतीयस्तु ब्रह्मगुप्तकृतः। अयमपि द्विविधः। प्रथमो ब्रह्मस्फुटसिद्धान्तश्चतुर्वेदाचार्यपृथूदकस्वामिकृतटीकासहितो द्वितीयः खण्डनखण्डखाद्यनाम्ना प्रसिद्धो भट्टोत्पलकृतटीकासहितः। उभयमपि यथावकाशं प्रकाशितं भविष्यति।

(३) वसिष्ठसिद्धान्तोऽपि लघुवृद्धभेदेन द्विविधः।

(४) लोमशसिद्धान्तो रोमकसिद्धान्तश्चैक एवेति वृद्धाः। गणकतरङ्गिण्यामपि २ पृष्ठेऽवलोकनीयम्॥

हिता—बृहस्पतिसंहिता—वसिष्ठसंहिता—लोमशसंहिता—नारदसंहिता—भृगुसंहिता(१)—गर्गसंहिता(२)—पुस्तकान्यपि लब्धानीत्येतेषां पुस्तकानां मुद्रणद्वारा प्रकाशनाय ज्यौतिषसिद्धान्तसंग्रहनाम्ना तानि संकलय्याचाहं तेषां प्रकाशने प्रवृत्तः ॥

तत्रेदानीं पठनपाठनादिषु प्रचलितोऽनेकविधभाष्यटीकासहितः सूर्यसिद्धान्तो नारदपुराणान्तर्गतः(३) यानि च वचनानि सूर्यसिद्धान्तनाम्ना भट्टोत्पलेन बृहत्संहिताटीकायां समुद्धृतानि तान्यस्मिन् सूर्यसिद्धान्ते नोपलभ्यन्ते। उपलभ्यन्ते चापरस्मिन् सूर्यसिद्धान्ते स चायोध्याधिपतिश्रीमानसिंहमहाराजानां पुस्तकालये विद्यमानो दृष्टो महामहोपाध्यायश्रीसुधाकरद्विवेदिभिरिति स एवोपात्तविंशतिसिद्धान्तान्तर्गत इति। किन्त्विदानीं तस्य दुर्लभत्वात् तन्मुद्रणमुपेक्षितम् ॥

ततश्च सोमसिद्धान्तस्य मुद्रणाय वाराणसीस्थसुप्रसिद्धज्योतिर्विदां श्रीमयूरभट्टानां पुस्तकं प्रथमादर्शत्वेन कल्पितम्। द्वितीयत्वेन च वाराणसीस्थराजकीयसंस्कृतपाठशालीयं यस्यान्ते लिपिकाल एवं लिखितः ॥

---

(१) उपलभ्यमाना जगत्प्रसिद्धा भृगुसंहिता तु होरालक्षणाक्रान्तत्वान्न संहितापदवाच्या अस्याश्च पादोनकोटिश्लोकात्मकत्वान्न चतुर्लक्षज्यौतिषान्तर्गतत्वम्। वास्तवीया भृगुसंहिता तु श्लोकानां षट्साहस्री वसिष्ठादिसंहितासमाना वर्तते।

(२) गर्गसंहिता त्वियमतीव प्रामाणिकी भट्टोत्पलेन बृहत्संहिताटीकायां समुद्धृतानि तद्वचनानि अत्र सर्वाण्युपलभ्यन्ते।

(३) नारदपुराणं चतुर्विधम्। एकं १८ महापुराणान्तर्गतम्। द्वितीयमाधुनिककथोपेतमपि १८ पुराणान्तर्गतं मन्यन्ते वैष्णवाः। तृतीयमुपपुराणान्तर्गतम्। चतुर्थं बृहन्नारदीयं पुराणम्।

"समाश्विनिथ्युन्मितशाककाले १५२७
भवालये(१) कृष्ण इदं लिलेख ।
अशोक्तशास्त्रं गणिताभिधं तु
यत्नेन धार्यं गणकैर्विचार्यम् ॥"

"पुस्तकमिदं नृसिंहदैवज्ञस्य"।

सूर्यसिद्धान्तभाष्यस्य सिद्धान्तशिरोमणिवासनावार्त्तिकस्य च कर्तुर्नृसिंहदैवज्ञस्य(२) पुस्तकं तत्पित्रा भास्करीयबीजगणितटीकानवाङ्कुरादिकर्त्रा कृष्णदैवज्ञेन(३) लिखितं किन्तु अत्याध्यायः पत्रं पृष्टं वा दूरे गतमेका पङ्क्तिरपि परिष्कृता नोपलभ्यते परमाद्दंशदोषादनेकेषु स्थानेषु विलुप्ताक्षरसूचकानि चिह्नान्येव वर्तन्त इत्याश्चर्यजनकम् । किन्तु पूर्वोक्तपुस्तकद्वयसंयोगेन याथातथ्येन संशोध्य पाठान्तराणि चाधोभागे सन्निवेश्य मुद्रितमिदं पुस्तकम् । अस्य संशोधने वाराणसीस्थराजकीयसंस्कृतपाठशालायां प्रधानजौतिषाध्यापकैरिदानीं परलोकवासिभिर्महामहोपाध्यायैः श्रीसुधाकरद्विवेदिभिर्महत् साहाय्यं कृतम् ॥

अमुमेव सोमसिद्धान्तं सोमः शौनकाय दत्तवान् शौनकः स्वशिष्यायेति शौनकसिद्धान्तनाम्ना व्यवहरन्ति केचित् ॥

ततश्चास्य ब्रह्मसिद्धान्तस्य मुद्रणे समुपक्रान्ते एकं पुरातनमस्मत्पुस्तकालये वर्तमानं पुस्तकं प्रथमत्वेन कल्पितम् द्वितीयत्वेन च वाराणसीस्थराजकीयसंस्कृतपाठशालीयमशुद्धिबहुलम् किन्तु सो

(१) भवालये काश्याम् । एतद्वंशीया अनेके विद्वांसः काश्यामेव विश्रान्ता इति तत्तद्ग्रन्थेषु प्रतिपादितम् ॥

(२) महामहोपाध्यायश्रीसुधाकरद्विवेदिसङ्कलितायां गणकतरङ्गिण्यां ८२ पृष्ठेऽवलोकनीयम् ॥

(३) गणकतरङ्गिण्यां ६९ पृष्ठे ऽवलोकनीयम् ॥

मसिद्धान्तदर्शापत्रमिति पूर्वरीत्यैव मुद्रितमिदं पुस्तकम् । अस्य संशोधने वाराणसीस्थराजकीयसंस्कृतपाठशालीयप्रधानज्यौतिषाध्यापकैर्ज्यौतिषाचार्यश्रीमुरलीधरशर्मभिर्महानायासः कृतस्तेन विनास्य मुद्रणं कथमपि मम साध्यं न भवेदिति ॥

एवं तेषुतेषु निरुक्तस्वात्मकज्यौतिषग्रन्थेषु मुद्रितेषु तत्तद्विशेषवर्णनं तत्रतत्र करिष्यामीति विज्ञापयामि । तदिदानीं मुद्रितग्रन्थान् दृष्टिपूतान् कृत्वा विद्वांसो मामकीनं परिश्रमं सफलयन्तु प्रसीदत्वनेन व्यापारेण परमात्मा श्रीविश्वेश्वर इति ॥

| | |
|---|---|
| वाराणसीस्थराजकीयसंस्कृतपाठशालीय-<br>पुस्तकालये<br>३० मई १८१२ | विन्ध्येश्वरीप्रसादद्विवेदी |



Printed by KRISHNA DAS GUPTA, *Proprietor*,
at the Benares Printing Press.

# सोमसिद्धान्तः ।

श्रीगणेशाय नमः ।

बृहस्पतिसुतं शान्तं सुखासीनं प्रियेक्षणम् ।
अभिवन्द्यं मुनिर्धीमान् शौनकः परिपृच्छति ॥ १ ॥
भगवन् सर्वशास्त्रज्ञ सर्वभूतहिते रत ।
कथं ग्रहस्थितिर्यावल्लग्नकालविधाः क्रमात् ॥ २ ॥
उपरागश्च खेटानां योगश्चारग्रहाः क्रमात् ।
ग्रहर्क्षस्योदयः पातस्तत्रापि ग्रहरूपिणः ॥ ३ ॥
शृङ्गोन्नतिर्जगत्सृष्टिस्थितिसंहृतयोऽपि च ।
एतन्मे संशयं छिन्धि भगवन्नौषधीपते ॥ ४ ॥
श्रुत्वा चैतत् त्रिलोकेशश्चन्द्रमाः शौनकोदितम् ।
प्रत्युवाच महाभाग इदं वचनमादरात् ॥ ५ ॥
महर्षे त्वं समर्थोऽसि ज्ञातुमेतदशेषतः ।
शृणु शौनक वक्ष्यामि शास्त्रं परमदुर्लभम् ॥ ६ ॥
वेदाङ्गमखिलं श्रेष्ठं यत्पृष्टोऽहं त्वया मुने ।
दशगुर्वक्षरैः प्राणः षड्भिः प्राणैर्विनाडिका ॥ ७ ॥
तत्षष्ट्या ६० नाडिका प्रोक्ता नाडीषष्ट्या दिवानिशम् ।
तत्त्रिंशताक्षमासः स्यात् सावनोऽर्कोदयैस्तथा ॥ ८ ॥
तथैन्दवस्तत्तिथिभिः सङ्क्रान्त्या सौर उच्यते ।

तथा द्वादशभिर्मासैर्दिननाडी विनाडिका: ॥ ९ ॥
षष्टिर्मधुवसन्ताद्यैर्वत्सरास्तु ऋतुर्भवेत् (१) ।
सुरासुराणां तद्दिव्यमहोरात्रं विपर्ययात् ॥ १० ॥
तत्षष्टिः षड्गुणा दिव्यं वर्षमासुरमेव च ।
चतुस्त्रिद्व्येकगुणितं पूर्वोक्तं दिव्यसंख्यया ॥ ११ ॥
द्वादशाब्दसहस्रं तु युगवर्षमितिः क्रमात् ।
शतं तादृक्समं तेषामादौ सन्ध्याभिधीयते ॥ १२ ॥
सन्ध्यांशास्ते च तत्पूर्वापरधर्मे प्रवृत्तयः ।
सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् ॥ १३ ॥
कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया ।
चतुर्युगानां सैका स्यात् सप्तति७१र्मनुसम्भवः ॥ १४ ॥
सन्धीकृतमितस्यान्ते धात्रीपिण्डजलप्लवः ।
ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश ॥ १५ ॥
कृतप्रमाणः कल्पादौ सन्धिः पञ्चदश स्मृतः ।
इत्थं युगसहस्रेण भूतसंहारकारकः ॥ १६ ॥
कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती ।
परमायुः शतं तस्य तयाहोरात्रसंख्यया ॥ १७ ॥
सर्वेषामेव जीवानां शतमेवायुरुच्यते ।
तत्तच्छ्वासप्राणकालस्तमशेषविनिर्णयः ॥ १८ ॥
विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ।

---

(१) षड्भिर्मधुवसन्ताद्यैर्वत्सरो ऋतुभिर्भवेत् ॥
एतादृशः पाठः साधुः ।

तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ॥ १९ ॥
प्राक्चरास्ते ग्रहास्तुङ्गाः पाताः प्रत्यक्चराः स्मृताः ।
प्रत्यक्त्वभगणास्तेषां पौष्णान्ते भगणास्तथा ॥ २० ॥
कुजार्किगुरुशीघ्राणां सूर्यज्ञोशनसां युगे ।
पूर्णाम्बरनभोव्योमरदवेदा ४३२०००० भसङ्ख्याः ॥ २१ ॥
रसाद्रिसुरबाणाद्रिशैलार्थाः ५७७५३३७६ शीतगोस्तथा ।
दन्ताष्टरसनन्दाग्निनयनानि २२९६८३२ कुजस्य च ॥ २२ ॥
ज्ञशीघ्रस्य नभस्तर्कखागत्र्यङ्कनगेन्दवः १७९३७०६० ।
बृहस्पतेः खदस्राश्विवेदषड्वह्नयस्तथा ३६४२२० ॥ २३ ॥
शुक्रशीघ्रस्य तर्काद्रिवह्न्याकृतिनभोऽद्रयः ७०२२३७६।
शनेर्भुजङ्गषट्पञ्चतर्काब्धिसितरश्मयः१४६५६८॥२४॥
इन्दूच्चस्य विकृत्यष्टभुजङ्गमपयोधयः ४८८२०३ ।
नागाग्नियमदस्रवह्निहस्ताः २३२२३८ पातस्य शीतगोः ॥ २५ ॥
भूसावनदिनार्कस्य उदयादुदयास्तथा ।
अष्टनेत्राष्टशैलेन्दुगोशैलाद्रिशरेन्दवः १५७७९१७८२८ ॥ २६ ॥

भानामष्टाक्षिसर्पाद्रित्रिद्विद्यष्टशरेन्दवः
१५८२२३७८२८ ॥
प्राग्यायिभगणोनास्ते युगे तस्योदयः स्मृतः ॥ २७ ॥
अधिमासा भवन्त्येव सूर्येन्दुभगणान्तरम् ।
चान्द्राः खाष्टखखव्योमखखाग्निव्योमषट्धराः
१६०३०००००८० ॥ २८ ॥
षड्वह्नित्रिहुताशाङ्कतिथयस्त्वा१५९३३३६धिमासकाः ।
तिथिक्षया यमार्थाक्षिद्यष्टव्योमशराश्विनः
२५०८२२५२ ॥ २९ ॥
सहस्रगुणितं कल्पे तद्भगे(१) यत्प्रकीर्तितम् ।
सूर्यमन्दस्य भगणाः कल्पे सप्ताष्टवह्नयः ३८७ ॥३०॥
कौजस्याब्धिनभोनेत्रा २०४ बौधास्याष्टर्तुवह्नयः३६८।
जीवस्य खखरन्ध्राणि ९०० शौक्रस्यार्थगुणेषवः
५३५ ॥ ३१ ॥
गोग्नयः ३९ शनिमन्दस्य पातानामथ कीर्त्यते ।
कौजस्य मनुनेत्राणि २१४ बौधस्याष्टाष्टसागराः
४८८ ॥ ३२ ॥
जीवस्य कृतशैलेन्दु १७४ शौक्रस्य त्रिनभोनव ९०३।
शनिपातस्य भगणाः कल्पे यमरसर्तवः ६६२ ॥ ३३ ॥
कल्पादौ खखवेदाद्रिकृतै ४७४०० र्यहृदिव्यहायनैः ।
सृज्यते विधिना विश्वं तद्वेयादब्दसञ्चयात् ॥ ३४ ॥

(१) तद्युगे इति पाठः साधुः ।

गार्ग्यश्लोकः ।

अथ माहेश्वरामुष्यो*** ब्रह्मणोऽधुना (१) ।
सप्तमस्य मनोर्याता द्वापरान्ते गजाश्विनः २८ ॥ पूर्वा
खचतुष्कभुजङ्गाष्टशररन्ध्रनिशाकराः १९५८८००००
सृष्टेरतीताः सूर्याब्दा वर्तमानात् कलेरथ ॥ ३६ ॥
मासीकृताब्दाश्चैत्राद्यैर्गतमासैर्युताः पृथक् ।
अधिमासहताः सूर्यमासैर्लब्धाधिमासकैः ॥ ३७ ॥
युक्ता दिनीकृता युक्तास्तिथिभिर्निहताः पृथक् ।
क्षयाहैश्चन्द्रमासाप्ता विशोध्यावमवासराः ॥ ३८ ॥
सावनो द्युगणः सूर्यादित्थं योऽसौ नगैर्हृतः ।
सूर्याद्यो वासराधीशो लङ्कायामर्द्धरात्रिकः ॥ ३९ ॥
सिद्धपुर्यां तु मध्याह्ने यमकोट्यामिनोदये ।
वारप्रवृत्तिः सन्ध्यायां रोमकायामिति स्थितिः ॥ ४० ॥
रात्र्यर्द्धपरतो वाच्या प्रवृत्तिः पूर्वदेशजा ।
लङ्कायामन्यथा पश्चात्तद्देशान्तरकालतः ॥ ४१ ॥
वारप्रवृत्तेर्घटिका द्विघ्न्यो २ वाण ५ हृताः क्रमात् ।
पञ्चभिः स्वस्वदिनपात् क्षेपा वारादिभिः स्मृताः ॥४२॥
प्राक्पञ्चोद्धृतशेषार्द्धं कालहोरेति नाडिकाः ।
द्युगणस्त्रिंशता षड्घ्नषष्ट्या द्विविहृते फले ॥ ४३ ॥
सैके सप्ताविशेषे ते मासवर्षपती क्रमात् ।

(१) अथ माहेश्वरामुष्य दिवसे ब्रह्मणोऽधुना ।
इति पाठः साधुः ।

यथा स्वभगणघ्नाह्वा भगणादिग्रहाः कहैः ॥ ४४ ॥
द्युगणो भगणाभ्यस्तो भगणादि कुवासरैः ।
भगणेभ्यस्तथा भुक्तिः पातस्वक्राद्विशोधिताः ॥ ४५ ॥
गुरोरतीतभगणा द्वादशघ्ना गृहैर्युताः ।
वर्तमानैर्गतेभ्योऽब्दा विजयाद्याः खषट्(६०)हृताः ॥४६॥
लङ्कामेर्वन्तराभ्यस्ताः काञ्ची लोहितकं सरः ।
अवन्तीवत्सगुल्मौ च तत्परीतेन्दुतेग्रहाः ॥ ४७ ॥
उन्मीलनादतीताद्वा दृक्सिद्धं गणितागतात् ।
यदा तदा मध्यगस्य स्वस्थानं प्रत्यगन्यथा ॥ ४८ ॥
देशान्तरघ्नाः षष्टिघ्नाः स्वभूपरिधिना हृताः ।
तन्नाडिका स्यात्तद्व्याप्त्याभ्य एव तदन्यथा ॥ ४९ ॥
तालवर्गो ४० महीकर्णो १६०० स्तद्वर्गोद्घशताडितात् ।
मूलं भूपरिधिस्थोऽयं लम्बज्याघ्नस्त्रिभज्यया ॥ ५० ॥
भक्तः स्वकलेन भुक्तिर्देशान्तरहता हृता ।
लिप्तादि प्राग्वृणं पश्चात् स्वग्रहे स स्वकः स्मृतः ॥ ५१ ॥
स्वदेशजा ग्रहास्तेपि मध्यरात्रिभवाः स्वके ।
इष्टनाडीहता भुक्तिः षष्ट्या स्वर्णं गतैष्ययोः ॥ ५२ ॥
वक्रिणः फणिपाः पश्चात्प्राग्यायी व्योमगः स्वकः ॥५३॥

इति श्रीसोमसिद्धान्ते चतुर्थे शौनकप्रश्ने मध्यमाधिकारः प्रथमः ॥

भचक्रात् षष्ठ्यत्यंशाः ९६ समभूया च सैव हि ।
आद्याग्रखण्डद्वीपार्द्धे पिण्डज्या तद्दलाभिधा ॥ १ ॥

प्रथमज्याप्तखण्डोनः खण्डः खण्डः परस्य च ।
अन्यापरज्योत्थखण्डा ज्यास्तुर्विंशतिस्त हि ॥ २ ॥
उत्क्रमात् पिण्डकाः खण्डा उत्क्रमज्याप्तपिण्डकाः ।
यदोत्क्रमेण ज्योनान्त्या ज्यार्द्धपिण्डाः क्रमादमी ॥ ३ ॥
तत्त्वनेत्राणि गोऽब्ध्यब्धिस्तथारूपनगर्तवः ।
खाङ्काष्टौ बाणशून्येशाः शरचन्द्रगुणेन्दवः ॥ ४ ॥
कृतिबाणेन्दवो गोभूमहीधरहिमांशवः ।
दिगङ्कचन्द्रास्त्रिनवनखाः सप्तर्त्तुदस्त्रकाः ॥ ५ ॥
चन्द्रानलाब्धियमला बाणनागशराश्विनः ।
अष्टाश्विनगनेत्राणि नन्दपञ्चभगाश्विनः ॥ ६ ॥
नागाद्रिनवनेत्राणि कृताष्टगगनानलाः ।
सप्तात्यष्टिगुणास्तर्कपञ्चनेत्रकृताशनाः ॥ ७ ॥
प्रकृतित्रिदशा नेत्रमुनिदेवा यथाक्रमाः ।
नवाम्बराब्धिबह्नला रूपाग्निकृतपावकाः ॥ ८ ॥
दृभत्रिगत्यवस्थास्त्रोत्क्रमज्यां प्रब्रवीम्यथ ।
शैला नवाश्विनस्तर्करसा मुनिपिनाकिनः ॥ ९ ॥
द्विष्टतिः क्ष्मोत्कृतिर्वेदार्थत्रि पूर्णरसाब्धयः ।
गोद्व्यर्थी दिक्नगास्त्र्यर्थद्वीपाः शैलवियद्दृशः ॥ १० ॥
क्ष्मात्यष्टिचन्द्रा बाणाब्धिविश्वेऽष्टाश्विशरेन्दवः ।
अतिधृत्यद्रिशशिनो धृतिनन्दनिशाकराः ॥ ११ ॥
त्रिहस्तशशिनेत्राणि देवपावकवाहवः ।
अष्टाब्धितत्त्वं शैलर्तुभान्यङ्काष्टनवाश्विनः ॥ १२ ॥

गुणचन्द्रद्विदहना वसुविक्ततवह्नयः ।
ग्रहं स्वतुङ्गात् संशोध्योच्छिष्टं केन्द्रं पदे समे ॥ १३ ॥
गम्या दोर्ज्या गतात्कोटिरोजे पादे ऽन्यथा भवेत् ।
लिप्ता हृता तत्त्वयमैः शिष्टजान्तरयोर्वधात् ॥ १४ ॥
तत्त्वाश्विभिः फलं योज्यं गतज्यायां कलादिकम् ।

| संख्या | जीवाः | ज्याखण्डा. | संख्या | उत्क्रमज्याः | खण्डानि |
|---|---|---|---|---|---|
| १ | २२५ | २२४ | १ | ७ | २२ |
| २ | ४४८ | २२२ | २ | २८ | ३७ |
| ३ | ६७१ | २१८ | ३ | ६६ | ५१ |
| ४ | ८९० | २१५ | ४ | ११७ | ६५ |
| ५ | ११०५ | २१० | ५ | १८२ | ७८ |
| ६ | १३१५ | २०५ | ६ | २६१ | ९३ |
| ७ | १५२० | १९९ | ७ | ३५४ | १०६ |
| ८ | १७१९ | १९१ | ८ | ४६० | ११९ |
| ९ | १९१० | १८३ | ९ | ५७९ | १३१ |
| १० | २०९३ | १७४ | १० | ७१० | १४३ |
| ११ | २२६७ | १६४ | ११ | ८५३ | १५४ |
| १२ | २४३१ | १५४ | १२ | १००७ | १६४ |
| १३ | २५८५ | १४३ | १३ | ११७१ | १७४ |
| १४ | २७२८ | १३१ | १४ | १३४५ | १८३ |
| १५ | २८५९ | ११९ | १५ | १५२८ | १९१ |
| १६ | २९७८ | १०६ | १६ | १७१९ | १९९ |
| १७ | ३०८४ | ९३ | १७ | १९१८ | २०५ |
| १८ | ३१७७ | ७९ | १८ | २१२३ | २१० |
| १९ | ३२५६ | ६५ | १९ | २३३३ | २१५ |
| २० | ३३२१ | ५१ | २० | २५४८ | २१९ |
| २१ | ३३७२ | ३७ | २१ | २७६७ | २२२ |
| २२ | ३४०९ | २२ | २२ | २९८९ | २२४ |
| २३ | ३४३१ | ७ | २३ | ३२१३ | २२५ |
| २४ | ३४३८ | ० | २४ | ३४३८ | ० |

रवेर्मन्दपरिध्यंशा मनवो यमलाग्नयः ॥ १५ ॥
अर्थाद्रयो वेदगुणाः सुराः सूर्या नवार्णवाः ।
कुजादीनामथो शैघ्या विषयानलदस्रकाः ॥ १६ ॥

| मन्दपरिधयः । | | | | | | | शीघ्रपरिधयः । | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | चं | भौ | बु | बृ | शु | श | र | चं | भौ | बु | गु | शु | श |
| १४ | ३२ | ७५ | ३४ | ३३ | १२ | ४९ | ० | ० | २३५ | १३३ | ७० | २६२ | ३९ |

गुणविश्वे खशैलास्च द्युत्कृतिर्नवपावकाः ।
परमन्विन्दुहृता दोर्ज्या ज्ञेया हृत्ता कुजस्य तु ॥ १७ ॥
अर्केन्द्वोर्मनुवह्न्यभ्रशशाङ्कैस्च त्रिभज्यया ।
अन्येषां ज्ञोच्चमान्देऽथ शैघ्र्ये शुक्रे ज्ञभूभुवाम् ॥ १८ ॥
एकज्यया कृतां शैघ्र्ये जीवार्क्योस्तद्वनं भवेत् ।
स्फुटवृत्तहते बाहुकोटिज्ये भगणांशकैः ॥ १९ ॥
फलज्यो मन्दजो(१) चापं भुजात् फलकलाः स्मृताः ।
मृगकर्क्यादिजस्वर्णव्यासार्द्धे शीघ्रकोटितः ॥ २० ॥
फलज्यातो दोःफलज्या वर्गैक्याद्यत् पदं श्रुतिः ।
दोःफलज्या त्रिजीवाघ्नी श्रुत्याप्तं स्यात्तु तद्धनुः ॥ २१ ॥
शैघ्र्यं तद्दोःफलं प्रोक्तं चापानयनमुच्यते ।
आसन्नज्याथवा शिष्टं शिष्टं तत्त्वाश्विभिर्हतम् ॥ २२ ॥
शुद्धाशुद्धज्यान्तराप्तं शुद्धज्यासंख्यया हतैः ।
तत्त्वाश्विभिः समायोज्यं धनुर्लिप्ताः प्रकीर्त्तिताः ॥ २३ ॥

(१) फलज्या मन्दजा इति पाठः साधुः ॥

स्वर्णं बाहुफलं केन्द्रे मेषजूकादिके ग्रहे ।
शीघ्रार्द्धमन्दार्द्धखगे फलार्द्धं कृतसञ्ज्ञकः ॥ २४ ॥
मध्ये शैघ्र्यफलस्यार्द्धं मान्दमर्द्धफलं तथा ।
शैघ्रार्धं मध्यगे मन्दे मान्दं शीघ्रफलैः क्रमात् ॥२५॥
भौमादीनामयं मार्गो मन्दकर्मैकमन्ययोः ।
भानुबाहुफलाभ्यस्ता ग्रहभुक्तिः समुद्धृता ॥ २६ ॥
लिप्ताभचक्रलिप्ताभिरर्कवत् खचरेऽपि तत् ।
नात्यन्तराद्दग्ग्रहयोः षष्टिघ्नं शेषलिप्तिकाः(१) ॥२७॥
तद्युतं केन्द्रभुक्तेर्वा (२) ग्रहवन्मन्दकर्मणि ।
यत् फलं कर्किनक्रादौ स्वर्णं तज्ज्योतिषां गतौ ॥ २८॥
शीघ्रकेन्द्रगतिस्त्रिज्याहृता कर्णोद्धृता ऋणम् ।
शीघ्रोच्चभुक्तेः स्याद्भुक्तिर्वक्रभुक्तिर्विपर्यये ॥ २९ ॥
तद्दणं मध्यभुक्तिश्च हित्वा शीघ्रोच्चभुक्तितः ।
शेषार्द्धमध्यभुक्त्यैक्यं शीघ्रार्द्धगतिरुच्यते ॥ ३० ॥
युगे च षट्शतैकत्वे भचक्रं प्राक् च लम्बते ।
तद्गुणो भूदिनैर्भक्तो द्युगणोऽयनखेचरः ॥ ३१ ॥
तच्छुद्धचक्रदोर्लिप्ता द्विशत्याप्तायनांशकाः ।
संस्कार्या जूकमेषादौ केन्द्रे स्वर्णं ग्रहे किल ॥ ३२ ॥
तत्संस्कृतग्रहात् क्रान्तिलग्नमप्युन्नतिः स्फुटा ।

---

(१) नात्यन्तरं दृग्ग्रहयोः षष्टिघ्नं शेषलिप्तिकाः ॥ २७ ॥
(२) तद्युतिः केन्द्रभुक्तेर्वा इति पाठः साधुः ॥

हरिजकालभागाश्च लग्नं यस्तं तु साधयेत् (१) ॥ ३३ ॥
ग्रहदोर्ज्याद्रिगोविश्वैर्हता त्रिज्योद्धृता धनुः ।
तस्याः क्रान्तिरुदग्याम्या तत्पूर्वापरभागजा ॥ ३४ ॥
क्रान्त्यन्तक्षेपमानेन ग्रहाणां सञ्चरं कियत् ।
तुलाभिन्नककुप्क्रान्तिक्षेपयोगान्तरं क्रमात् ॥ ३५ ॥
शुक्रज्ञपातयोर्मान्दं फलं मान्दं तृतीयकम् ।
चतुर्थं ग्रहवच्छैघ्र्यं पातेष्वर्काङ्गिरोसृजाम् ॥ ३६ ॥
पातान् ग्रहेभ्यः शीघ्रोच्चात् प्रोह्य दोर्ज्यां ज्ञशीतयोः ।
चन्द्रात् खतारकैः खाङ्कैः खार्कैः षष्ट्या खभास्करैः ॥३७॥
नभोर्कैस्ताडयेदन्यचलकर्णैः स्वकैर्भजेत् ।
त्रिज्ययेन्दोः फलधनुर्विक्षेपः क्रान्तिवत्ककुप् ॥
चं.२७० भौ.६० बु.१२० बृ.६० शु.१२० श.१२० ॥३८॥
क्रान्तिज्या विषुवद्भाघ्नी त्रिसप्तशरसंगुणा ।
क्रान्तेः कोटिज्यया भक्ता द्विघ्नं यातरहासवः (२) ॥३९॥
तच्चापं स्वदिनाब्धंशघ्ने स्वर्णं याम्येऽन्यथोत्तरे ।
क्षेपा दिनार्द्धे क्रमशो भानामपि विजिस्त्वयम् (३) ॥४०॥
ग्रहोदयप्राणहता राशिलिप्ताहृता गतिः ।
स्वाहोरात्रासुभिः स्वर्णं चक्रासुर्क्षर्जुवक्रितः ॥ ४१ ॥
अर्कोनचन्द्रलिप्ताभ्यस्तिथयो नखपर्वतैः ।

---

(१) हरिजात् कालभागाश्च लग्नं यत्तत्प्रसाधयेत् इति पाठः साधुः ॥
(२) द्विघ्नया चरजासवः इति पाठः साधुः ॥
(३) क्षपादिनार्द्धे क्रमशो भानामपि विधिस्त्वयम् ॥

गतगम्या च षष्टिघ्ना नाड्यो गत्यन्तरोद्धृताः ॥ ४२ ॥
ध्रुवाणि शकुनं चैव चतुष्पान्नागमर्द्दतः ।
किंस्तुघ्नं कृष्णभूतायाश्चत्वारि करणानि च ॥ ४३ ॥
बवादीनां ततः सप्त चराख्यकरणानि तु ।
मासेऽष्टकृत्व एकैकं करणानां प्रकल्पयेत् ॥ ४४ ॥
तिथ्यर्द्धभोगं सर्वेषां करणानां प्रकल्पयेत् ।
गतगम्यकलाराशेर्गत्या हानिस्तु संक्रमे ॥ ४५ ॥
संस्कृतायनभागार्कसंक्रमस्त्वयनं किल ।
स्नानदानादिषु श्रेष्ठं मध्यमं स्थानसंक्रमः ॥ ४६ ॥
ग्रहलिप्ताष्टशत्या भं गम्याहानिगतैष्यकम् ।
तथार्केन्दुयुतेर्योगो गत्यैकेन दिनानि तु ॥ ४७ ॥

इति श्रीसोमसिद्धान्ते स्पष्टाधिकारो द्वितीयः ॥

छाया वैषुवती या सा नाम माध्याह्निकी च सा ।
तथार्केण हृते त्रिज्ये (१) विषुवत्कर्णभाजिते ॥ १ ॥
अक्षज्यालम्बजीवे तच्चापे याम्येऽक्षलम्बने ।
शङ्कुच्छायाकृतियुतेर्मूलं कर्णोऽन्यथापि वा ॥ २ ॥
तुल्यभिन्नदिगक्षांशक्रान्त्योर्विश्लेषणं नतम् ।
तद्दोस्त्रिज्ये हते सूर्ये कोट्याच हरभाश्रुती (२) ॥ ३ ॥
सौम्याक्षोना यदाक्रान्तिरक्षज्या द्वादशाहता ।
क्रान्तिज्याप्ता श्रुतिर्भानौ प्राचीरेखां समागते ॥ ४ ॥

(१) तथार्केण हते त्रिज्ये इति साधुः ॥
(२) तद्दोस्त्रिज्याहते सूर्ये कोट्याप्ते हरिभाश्रुती ॥

सममण्डलकर्णाप्ता एतद्द्वादशसंगुणा (१) ।
सममण्डलशङ्कुः स्यादन्त्यज्यागुणिता नरः ॥ ५ ॥
परमापक्रमज्याप्ता भुजज्या तद्वनू रविः ।
क्रान्तिज्येष्टश्रुतिघ्ना च लम्बाप्ताग्राङ्गुलादिका ॥ ६ ॥
विषुवत्या तद्वनर्णं याम्ये स्यादुत्तरे भुजे ।
अन्यथा वा भुजोऽनेन दिशां संसाधनं ब्रुवे ॥ ७ ॥
क्रान्तिज्याविषुवत्कर्णबधोर्कैरग्रमौर्विका ।
त्रिज्यावर्गाद्धृतोग्रज्यावर्गोनाद्व द्वादशाहतात् ॥ ८ ॥
पुनर्द्वादशनिघ्नाच्च लभ्यते यत्फलं बुधैः ।
शङ्कुवर्गार्द्धसंयुक्तविषुवत्कर्णभाजिता ॥ ९ ॥
लब्धं तु करणी नाम तां पृथक् स्थापयेत्तु सः ।
विषुवच्छायार्कबधादग्रज्यासंगुणात्तथा ॥ १० ॥
भक्ता फलाख्यं तद्वर्गसंयुक्तकरणीपदे ।
फलेन हीनसंयुक्तं दक्षिणोत्तरगोलयोः ॥ ११ ॥
याम्ययोर्विदिशोः शङ्कुरेव याम्योत्तरे रवौ ।
उदक् चरति तस्यार्कें शङ्कुस्तूत्तरयोस्तु सः ॥ १२ ॥
तत्त्रिज्यावर्गविश्लेषान्मूलं दृग्ज्याभिधीयते ।
स्वशङ्कुना विभज्याप्ते दृक्त्रिज्याद्वादशाहते ॥ १३ ॥
छायाकर्णौ तु कोणेषु यथा स्वं देशकालयोः ।
कोणप्रभागकृतिदलं यं हत्वा त्रिभज्यया ॥ १४ ॥
क्रान्तिज्याकोणकर्णाप्तं तच्छायामानकं भवेत् ।

---

(१) सममण्डलकर्णाप्ता त्रिज्याद्वादशसंगुणा इति साधुः ॥

दृग्ज्या स्यात्कृतितस्त्यक्ता त्रिज्यावर्गात्पदं च यत् ॥१५॥
उदक्चरज्यया युक्ता त्रिज्यया याम्ययोनिता ।
नतोत्क्रमज्यया हीना क्रान्तेः कोटिज्यया हता ॥१६॥
त्रिज्याप्ता द्वादशगुणा विषुवत्कर्णभाजिता ।
शङ्कुः पूर्ववदेवादिक्छायाकर्णौ स्वकाधिके ॥ १७ ॥
अभीष्टच्छाययाभ्यस्ता त्रिज्या तत्कर्णभाजिता ।
दृग्ज्या तत्प्रतिलोमेऽधो नतज्याद्योदयोनताः ॥ १८ ॥
तदुत्क्रमधनुःपूर्वापरज्यास्युर्नतासवः ।
मध्यच्छाया मध्यभुजा त्रिज्याप्ता तच्छ्रवोद्धृताः ॥१६॥
नतज्या स्यान्नतघ्नस्तत्तथाह्नोप्रतिस्थिता ।
तत्सूर्यनभलिप्ताश्च तदीयक्रान्तिलिप्तिकाः ॥ २० ॥
दिसेदे (१) मिश्रिताः साम्ये विशिष्टाश्चाक्षलिप्तिकाः ।
तज्ज्याकोटिभुवे जीवे अक्षलम्बनमौर्विके ॥ २१ ॥
अक्षज्यार्कहता भक्ता लब्धं या (२) विषुवत्प्रभा ।
भिन्नतुल्यवधाच्चैक्यविश्लेषज्याक्रमाभिधा ॥ २२ ॥
त्रिज्याप्ता मुनिगोविश्वैधनुभाकजिभलयोः ।
कर्क्यादौ प्रोह्य चक्राद्धात्तुलादौ भार्द्धसंयुते ॥ २३ ॥
तुलादौ (३) प्रोह्य भगणान्मयमेषादिनायकैः ।
प्राक्चक्रं चलितं हीना छायार्कात् करणागतात् ॥२४॥
पश्चादितगवास्वर्णं चलांशास्तद्दिनान्तरा ।

---

(१) दिग्भेदे इति साधुः ।
(२) भक्ता लम्बया इति साधुः ।
(३) मृगादौ इति साधुः ।

छायार्कगतसंशुद्धं छायार्कोभयलिप्तिकाः ॥ २५ ॥
देशान्तरकलाभानामनुपातात्तथोत्तरा ।
छायादोःकृतिविश्लेषात् मूलं शङ्कुस्तथा विधोः ॥ २६ ॥
शङ्कुच्छाया समस्थाने कल्प्यमाद्वादशाङ्गुलम् ।
तच्छायाग्रं भुजव्यस्ता दिशं शङ्कुभुजाश्रयोः ॥ २७ ॥
स्थूलशङ्कुस्य प्रसार्य मध्ये तत्तलशङ्कुना ।
प्राचीरेखां विलिख्येदं वृत्तं तस्माच्च मध्यतः ॥ २८ ॥
तिमिना याम्यसौम्या च विदिग्रेखे च युक्तितः ।
चतुरस्रं बहिः कुर्यात् सूत्रैर्मध्याद्विनिःसृतैः ॥ २९ ॥
तथा दिशं भुजाः प्राची रेखार्द्धैस्य सामाहृताः ।
बाहुद्वयान्तरे यत्स्यादयातयुतिवद्धनुः ॥ ३० ॥
बिन्दुत्रयस्पृक्सूत्रेण स्फुटच्छायाभ्रमं सदा ।
खागाष्टयोऽर्थगोगैकाः शरत्यङ्कहिमांशवः ॥ ३१ ॥
क्रमोत्क्रमादधःस्थाप्य मेषाल्लङ्कोदयासवः ।
स्वदेशचरखण्डोना मृगाद्याः कर्कटादयः ॥ ३२ ॥
स्वदेशचरखण्डाढ्याः स्वोदयादनुपाततः ।
लग्नमेतैर्मध्यलग्नं नतैर्लङ्कोदयासवः ॥ ३३ ॥
लग्नग्रहान्तरप्राणा विज्ञेयाः कालसाधने ।
सूर्यादूने निशाशेषाल्लग्नार्कादधिके दिवा ॥ ३४ ॥
भचक्रार्द्धयुता भानोरधिकास्तमनात् परम् ॥ ३५ ॥
इति श्रीसोमसिद्धान्ते त्रिप्रश्नाधिकारस्तृतीयः ॥
योजनानां पञ्चषष्टिः शतघ्ना भास्करस्य तु ।

विष्कम्भो मण्डलस्येन्दोः साशीति(१)चतुःशती ॥ १ ॥
मध्यगत्या हृता स्पष्टगतिघ्ना व्यासकौ स्फुटौ ।
स्फुटार्कमण्डलकला सोमस्वभगणाहृता ॥ २ ॥
स्यादाजभागणैर्भक्ता इन्दोः षष्टिस्तदाननम् ।
भास्वद्व्यासकलाश्चन्द्रकक्षायां तिथियोजनैः ॥ ३ ॥
स्फुटार्कभुक्तिर्भूव्यासगुणिता मध्ययोद्धृता ।
लब्धं सूची महीव्यासस्फुटार्कश्रवणान्तरम् ॥ ४ ॥
मध्येन्दुव्यासगुणितं मध्यार्कव्यासभाजितम् ।
विशोध्य लब्धं सूच्यास्तु तमो लिप्तास्तु पूर्ववत् ॥ ५ ॥
भचक्रार्द्धो भवेद्भूता तथार्केण***वा ।
उरगे ग्रहणं यद्वा क्रियभार्द्धार्द्धकोनके (२) ॥ ६ ॥
छादकोऽर्कस्य शीतांशुरधःस्थो घनवद्भवेत् ।
भूच्छायाच्छादकश्चन्द्रस्याद्येन्यत्र परिस्थतः ॥ ७ ॥
पर्वान्तकेन्दुविक्षेपं प्रोह्य भूभाशशाङ्कयोः ।
मानैक्यार्द्धार्द्धग्रहणं स्यादन्यथा मध्यकालकम् ॥ ८ ॥
पक्षान्तं दोर्मध्यकालं यथार्कस्य तथा नहि ।
मासान्तर*तद्बिम्बं (३) मध्यस्थाकाशदर्शनात् ॥ ६ ॥
प्राक्पश्चाल्लम्बनेनोनयुक्तं मासान्त एव तत् ।
मध्यकालस्तु तद्वच्च स्पर्शमोक्षेति चारणात् ॥ १० ॥

(१) सहाशीत्या इति साधुः ॥
(२) भचक्रार्द्धसमोद्भूते तथार्केण समेऽपि वा ।
उरगे ग्रहणं यद्वा कियद्वार्द्धार्द्धकाल्पके । इति साधुः ॥
(३) मासान्तरे तु तद्बिम्बमिति साधुः ॥

किम्भाहरावै सूर्येन्द्वोर्दक्षिणोत्तरसंस्थयोः ।
बिम्बमध्यगतं व्योम नहि लम्बनकारणम् ॥ ११ ॥
पूर्वापरस्थयोर्बिम्बमध्ययोरन्तरापरम् ।
कालहेतुरतो लग्नं ज्या(१)न्त्यापक्रमसंगुणा ॥ १२ ॥
लम्बज्याप्तोदयज्येष्टमध्यलग्ननतज्यया ।
हृता त्रिभज्यया भक्ता वर्गयोश्च न(२)तज्ययोः ॥ १३ ॥
विश्लेषान्मूलमुच्येत दृक्क्षेप इति संस्कृतिम् ।
प्रोह्य त्रिज्याकृतेर्मूलं दृग्गतिज्यानया हरः ॥ १४ ॥
एकज्यामध्यतोवर्गलग्नार्कान्तरतोशुभः(३) ।
छेदेन भक्तो नाड्यादि लम्बनं चन्द्रसूर्ययोः ॥ १५ ॥
असकृत् कर्मणानेन मध्यकाले स्थिरीकृते ।
दृक्क्षेपात् सप्तवर्गाप्तात् त्रिज्ययावनतिर्भवेत् ॥ १६ ॥
मध्यलग्ननतांशाख्या दिक्तुल्येन्तरदिक्कया ।
नत्या तत्क्रान्तिरित्येतच्चन्द्रे क्षेपः स्फुटः स्मृतः ॥ १७ ॥
तत्प्रोह्यार्केन्दुमानैक्यदलाच्छन्नं बिवस्वतः ।
ग्राह्यग्राहकमानैक्यविश्लेषार्धकृतेः पदम् ॥ १८ ॥
विक्षेपवर्गहीनाद्यत्षष्टिघ्नं चन्द्रसूर्ययोः ।
भुक्त्यन्तरेण स्थित्यर्द्धं विमर्दार्द्धं क्रमेण च ॥ १९ ॥
तदूनपञ्चमासान्तात् स्पर्शनं च निमीलनम् ।

(१) लग्नज्या ।
(२) स्तत्र ।
(३) एकज्यावर्गतो मध्यलग्नार्कान्तरतो गुणः ।

अर्केन्द्वा(१)रसकृच्चैवं मोक्षोन्मीलनमन्यथा ॥ २० ॥
भानोस्तल्लम्बनेनैव कलाः स्पष्टाः स्युरेव हि ।
मध्येन या तया स्पष्टस्थित्यर्द्धं स्पर्शमोक्षयोः ॥ २१ ॥
दृष्टमध्यान्तरा नाड्या ताडिता(२) रविचन्द्रयोः ।
गत्यन्तरेण षष्ट्याप्ताः कोटिलिप्ता रवेस्तु ताः ॥ २२ ॥
मध्यस्थित्यर्द्धगुणिता स्पष्टस्थित्यर्द्धभाजिताः ।
स्फुटस्थिरे क्षेप(३)वर्गैक्यान्मूलं कर्णोन्तरे पदम् ॥ २३ ॥
मानयोगार्द्धतः प्रोह्य ग्रासस्तात्कालिको भवेत् ।
[illegible]कालस्तु व्यत्ययो नो(४) क्रमागतः ॥ २४ ॥
अक्षभाघ्ना नतज्याक्षकर्णाप्ता तस्य कार्मुकम् ।
वेलांशास्तस्य याम्यो स्ते(५)पूर्वापरकपालयोः ॥ २५ ॥
सत्रिराशिग्रहक्रान्त्या युतोनास्तुल्यबिम्बयोः ।
दिग्भोजविमला प्राग्वत्स्वङ्गुलान्यभखाद्रिभिः ॥ २६ ॥
दिनार्द्धप्राणा एकोनषष्ट्या तच्छन्नलिप्तिकाः ।
बिम्बक्षेपादिलिप्तास्य भवन्त्येवाङ्गुलानि तु ॥ २७ ॥
स्वच्छत्वाद् द्वादशांशोपि ग्रस्तश्चन्द्रस्य दृश्यते ।
लिप्तात्रयमपि ग्रस्तं तीक्ष्णत्वान्न विवस्वतः ॥ २८ ॥
सूर्योदयास्तसमये युक्तच्छन्नोपि भास्करः ।

---

(१) अर्केन्द्वो ।
(२) नाड्यस्ताडिता ।
(३) स्फुटास्तत्क्षेप ।
(४) व्यत्ययेनो ।
(५) सौम्ययाम्या ।

पितृभक्तिविहीनानां तीक्ष्णसन्तति लापयेत् ॥ २८ ॥
इति श्रीसोमसिद्धान्ते चतुर्थप्रश्ने चन्द्रग्रहणाध्यायः ॥
छेद्यकेन विना यस्मान्न ज्ञेयो यदुपप्लवे ।
विशेषोत्र प्रवक्ष्यामि छेद्यकज्ञानमुत्तमम् ॥ १ ॥
समस्थले न्यस्तविन्दुः समः खर्णाङ्गुलेन तु ।
बिम्बयोगार्द्धमानेन ग्राह्यार्द्धेन यथाक्रमम् ॥ २ ॥
लिखेद्वृत्तत्रयं कोष्ठे यथोक्तं साधयेदपि ।
प्रागिन्दोर्ग्रहणं पश्चान्मोक्षोर्कस्य विपर्ययात् ॥ ३ ॥
प्रागर्द्धाधिकस्य वृत्तस्य(१) वलनं तद्यथादिशम् ।
प्रत्यगग्रेन्यथा रेखे मध्ये तद्वलनाग्रतः ॥ ४ ॥
नीत्वा रेखामध्यवृत्तयोगात् क्षेपं यथादिशम् ।
रवीन्द्वोर्विवरान्तस्तं(२)मध्यसूत्रे तदग्रतः ॥ ५ ॥
तत्सूत्रे ग्रहसंयोगाद्ग्रासमोक्षौ विनिर्दिशेत् ।
वलनक्षेपहृक्तुल्यवलने प्राङ्मुखं नयेत् ॥ ६ ॥
भेदे पश्चान्मुखं राज्ञ(३)स्तदर्कस्य विपर्ययात् ।
तदग्रान्मध्यगे सूत्रे मध्यक्षेपं तदग्रतः ॥ ७ ॥
ग्राहकार्द्धेन तद्बिम्बेनोपरागस्य मध्यमः ।
व्यग्रक्षेपवलयाग्रे तु यत्तदा ग्राहकः शशी ॥ ८ ॥
मानैक्यार्द्धेष्टग्रहणं शेषतुल्यशलाकया ।

---

(१) प्रागर्द्धाधिकवृत्तस्य ।
(२) न्तःस्थं ।
(३) राज्ञश्चन्द्रस्य ।

ग्राहकमध्यादस्य मार्गे निर्दिष्टस्थानतोऽनुयः(१) ॥९॥
छाया ग्राहकबिम्बेन ग्रहणं स्फुटमादरात् ।
सर्वदा भास्करच्छन्नं कृतं(२)त्वर्यान्तु(३)शीतगोः ॥१०॥
धूम्रं कृष्णं कृष्णताम्रं कपिलं परश्गो भवेत् ।
रहस्यमेतद्देवानां सुशिष्याय प्रदीयते ॥ ११ ॥
पटोपरि लिखितं ज्ञास्तद्वरयथादिशम्(४) ।
दिग्शोर्यान्ति तथा काष्ठां कल्पयेदिति मे मतम् ॥ १२ ॥

इति श्रीसोमसिद्धान्ते चतुर्थे प्रश्ने परिलेखकाध्यायः ॥

भवन्त्यतीतधिष्ण्यानां भोगलिप्तायुता ध्रुवाः ।
अष्टाब्धयो ४८ वियद्वेदाः ४० शरतर्का ६५ मुनीषवः ५७ ॥ १ ॥
इभार्घा ५८ गोब्धयो ४९ ष्टाङ्गाः ६८ षडश्वाः ७६ श्रुतिभूमयः १४ ।
वेदार्घाः ५४ सागररसाः ६४ शून्यबाणाः ५० नभोरसाः ६० ॥ २ ॥
चत्वारिंशद्द ४० युगनगाः ७४ गजागाः ७८ सागरर्त्तवः ६४ ।
मनवश्च १४ षट्श्रुतयो ४६ वैश्वमाप्यर्द्धभोगगम् ॥ ३ ॥

---

(१) ग्राह्यमध्यादस्य मार्गे निर्दिष्टस्थानतो ऽनुया ।
(२) कृष्णं ।
(३) तुर्यन्तु ।
(४) पटोपरि लिखित्वा ज्ञास्तद्धरेत् यथा दिशम् ।

आप्यश्चैवाभिजित्प्रान्ते वैश्वान्ते श्रवणः स्थितः।
श्रवणस्यान्त्यपादो वा श्रविष्ठायाः स्वभोगतः॥ ४॥
नभोनागाश्च षड्वर्गौ द्विद्विका २२ नगपर्वताः ७७।
क्रान्तेः क्षेपलवास्तेषां दश द्वादश पञ्च च॥ ५॥
उदग्याम्ये पञ्चदश नव ९ सौम्ये रसानभः।
याम्येन्द्व उदग्भागे वियत्सूर्यास्त्रयोदश॥ ६॥
याम्ये रुद्राश्च यमलाः सौम्यभागे नगाग्नयः।
याम्येऽध्यर्द्धत्रयो वेदा नव सार्द्धेषवः शराः॥ ७॥
उदक्षष्टिः खाग्नयश्च षट्त्रिंशदथ दक्षिणाः।
अध्यर्द्धभागः सौम्यायां चतुर्विंशतिरुत्कृतिः॥ ८॥
खं चागस्त्याशीतिभागैर्याम्ये क्षीणे यमाङ्गतः(१)।
खार्णवैर्यमविंशांशे मृगव्याधस्तु दक्षिणे॥ ९॥
हुतभुक् ब्रह्महृदयं वृषे द्वाविंशभागगौ।
अष्टभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ॥ १०॥
पूर्वस्यां ब्रह्महृदयादंशकैः पञ्चभिः स्थितः।
प्रजापतिर्वृषान्ते तु सौम्येऽष्टत्रिंशदंशकैः॥ ११॥
अपांवत्सस्तु चित्राया उत्तरेंऽशैस्तु पञ्चभिः।
बृहत्किञ्चित् ततो भागैरापः षड्भिस्तथोत्तरे॥ १२॥
इति तारग्रहाणां स्युर्ध्रुवसंख्यानमेव हि।
प्रयोजनविशेषोऽस्ति न जाने तत्र गण्यते॥ १३॥

(१) यमो मिथुनराशिः।

हृषे सप्तदशे भागे यस्य याम्योंशकद्वयात् ।
विक्षेपोभ्यधिको भिन्द्याद्रोहिण्याः शकटं तु सः॥ १४॥
ताराग्रहाणामन्योन्यं युद्धं वाथ समागमः ।
समागमं चन्द्रधिष्ण्यैः सूर्येणास्तमयः सह ॥ १५ ॥
मन्दशीघ्राधिकानेता(१) संयोगे गतगम्ययोः ।
कालयोर्वक्रिणोर्व्यस्तं प्राग्यायिन्योधिको गतः(२)॥१६॥
भुक्त्यन्तरेण भुक्तिघ्ना ग्रहान्तरकलाहृता ।
एकस्मिन् भुक्तियोगेन वक्रिण्यस्तु समेधिकाः ॥ १७ ॥
ग्रहान्तरकलास्तद्वद्भुक्तियोगदिनानि हि ।
विक्षेपो विषुवद्भाघ्नः सूर्यांशो नतसंगुणः ॥ १८ ॥
दिनार्द्धाप्त उदक्क्षेपे स्वर्णं पश्चिमपूर्वयोः ।
दक्षिणाः प्राक्प्रतीच्यास्ते तद्दृक्कर्म ग्रहस्तु सः॥ १९ ॥
सबिम्ब(३)ग्रहजक्रान्तिक्षेपघ्नास्त्रिज्यया हृता ।
षट्कत्याप्ता ध्रुवः स्वर्णं भदिशोर्भिन्नतुल्ययोः ॥ २० ॥
द्वितीयमेतद् दृक्कर्म केचिन्नेच्छन्ति सूरयः ।
समलिप्त्योः पुनः कार्यावेतौ दृक्कर्मयुग्ग्रहौ ॥ २१ ॥
एतयोर्भिन्नतुल्यांशाक्षेपैक्यान्तरतोधिके ।
मानैक्यार्द्धे भवेतां तु तुल्यस्पर्शोन्यथान्यथा ॥ २२ ॥
भागाद्यं परितो लब्धघ्नास्त्रिष्टत्यांशाविरश्मयः ।

(१) मन्दाच्छीघ्राधिकोने तु ।
(२) प्राग्यायिन्यधिके गतः ।
(३) सन्निभ ।

ग्रहान्तरैकविक्षेपे भागे तस्मिन् समागमः ॥ २३ ॥
युद्धमंशुविमर्दाख्यं परव्यासमतोनके ।
एकोन चेदणुर्द्वौ चेदत्र स्थूलौ समागमौ ॥ २४ ॥
अंशाधिके तौ प्रबलौ यदि स्यातां समागमौ ।
अंशाधिके तु तौ स्वल्पौ विध्वस्तौ कूटविग्रहौ ॥ २५ ॥
स्थूलो जयी रश्मिपश्च जितो यो गुरुदीप्तिमान् ।
उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी ॥ २६ ॥
वेदोग्नयो ह्यष्टयोष्टा**षष्टिर्गजाब्धयः ।
विष्कम्भश्चन्द्रकक्षायां भौमादीनां यथाक्रमम् ॥ २७ ॥
एकज्याघ्नाश्चतुर्भास्ते द्विचतुष्कर्णभाजिताः ।
स्फुटव्यासः पञ्चदशविभक्ता मानलिप्तिकाः ॥ २८ ॥
एकज्याद्विगुणास्तेंशा भुक्ता वा बिम्बयोजनम् ।
भौमादीनां तु मार्गोयमेवानुक्तेः पुनः स्फुटः ॥ २९ ॥
स्वदृष्टनतानतस्थाने यथा दिक्भ्रमणं समे ।
शङ्कुद्वये स्थापिते तच्छायामार्गान्तरं गतः ॥ ३० ॥
छायादिशि स्वशक्त्यग्रे दर्पणस्थं मुखं यथा ।
तथा पश्येद्ग्रहं ताराविक्षेपान्तसमन्विते ॥ ३१ ॥
फाल्गुन्योर्भाद्रपदयोस्तथैवाषाढयोर्द्वयोः ।
विशाखाश्विनिसौम्यानां योगतारोत्तरा स्मृता ॥ ३२ ॥
पश्चिमोत्तरताराायां द्वितीया पश्चिमे स्थिता ।
हस्तस्य योगतारासौ श्रविष्ठायाश्च पश्चिमा ॥ ३३ ॥

ज्येष्ठाश्रवणमैत्राणां बार्हस्पत्यस्य मध्यमा ।
भरण्याग्नेयपित्र्याणां रेवत्याश्चैव दक्षिणा ॥ ३४ ॥
रोहिण्यादित्यमूलानां प्राची सर्पस्य चैव हि ।
यथा प्रत्यवशेषाणां स्थूला स्याद्योगतारका ॥ ३५ ॥

इति श्रीसोमसिद्धान्ते चतुर्थे नक्षत्रग्रहयुद्धसमागमाध्यायः षष्ठः ॥

अथार्कांशुसमाक्रान्तमूर्तीनामल्पतेजसाम् ।
उदयास्तगते यौ तत्परिज्ञानं प्रकीर्त्यते ॥ १ ॥
अवक्रिणादेः सूर्यादिभादिकाः शीघ्रगस्ततः ।
पश्चाद्यान्त्युदयं प्राच्यामूनमस्तं परेन्यथा ॥ २ ॥
सूर्यास्तकालिकौ पश्चात्प्राच्यामुदयकालिकौ ।
दिवाकरग्रहौ कुर्याद्दृक्कर्माथ ग्रहस्य तु ॥ ३ ॥
उभयोरन्तरप्राणाः षष्ट्या कालांशकाहृताः ।
सषड्भयोः प्रतिच्यां तु मार्गोयं ज्योतिषामपि ॥ ४ ॥
अस्तांशाश्चन्द्रभौमाद्याः अत्यष्टिमुनिरीश्वराः ।
आशास्थितिं क्रमात्प्रोक्ताः सूर्याद्यो कालजास्त्विमे ॥ ५ ॥
ज्ञशुक्रयोर्महत्त्वात्ते सूर्यौ अष्टौ च व क्रिणौ ।
स्वात्यगस्त्यमुनिव्याधाश्चित्रा ज्येष्ठा पुनर्वसू ॥ ६ ॥
अभिजिद्ब्रह्महृदयं त्रयोदशभिरंशकैः ।
हस्तश्रवणफाल्गुन्यः श्रविष्टा रोहिणी मघा ॥ ७ ॥
चतुर्दशांशकैर्दृश्या विशाखाश्विनदैवतैः ।

कृत्तिकामूलमैत्राणि(१) सार्परौद्रर्क्षमेव च ।। ८ ।।
दृश्यन्ते पञ्चदशभिराषाढाद्वितयं तथा ।
भरणीतिष्यसौम्यानि सौक्ष्म्यात् त्रिःसप्तकांशकैः ॥ ९ ॥
शेषाणि सप्तदशभिर्दृश्यादृश्यानि भानि तु ।
कालांशै(२)रधिकैरेभ्यो दृश्यान्यल्पैरदर्शनम् ॥ १० ॥
कालेष्टांशान्तरः कालः कला गत्यन्तरोद्धृताः ।
गतियोगेन वक्रिण्याप्तास्तु वारादिकं फलम् ।। ११ ।।
यल्लग्नाद्यत कालांशास्तल्लग्नासुहृता गतिः ।
राशिलिप्ताहृता स्यातां कालभुक्ती तयोरुभे ॥ १२ ॥
यद्वा राशिकलाभ्यस्ता हृता सा स्वोदयासुभिः ।
चेत्तांशा भास्करे स्वर्णं पश्चात्प्राक्स्थास्तभास्करः॥१३॥
अस्तार्कक्रान्तिसंख्या ये ग्रहसत्वरदर्शनात् ।
उदयास्तमेव कुर्वन्त्यस्तार्कर्क्षादिभिः कलाः ॥ १४ ॥
कार्यं द्वितीयं दृक्कर्म नृणां प्रत्यक्षकारकम् ।
शास्त्रीयव्यवहारे तु लोकं निष्फलयोजनम् ॥ १५ ॥
अभिजिद्ब्रह्महृदयं स्वातीवैष्णववासवाः ।
अहिर्बुध्न्यमुदक्स्थत्वान्न लुप्यन्ते ऽर्करश्मिभिः ॥ १६ ॥
सूर्योसूर्याधिकेन्यस्मिन्नपि षड्भानि(३) निक्षिपेत् ।
सूर्यास्तकालिकौ कुर्यात्तौ च सूर्यास्तताडितौ ॥ १७ ॥

(१) मैत्रमूलानीति पाठान्तरम् १ पु० ।
(२) काष्टांशै—पा० १ पु० ।।
(३) षड्राशि—पा० २ पु० ।।

द्यूतरान्तस्थयान्याभिर्भैर्नणां तत्फलं तथा ।
भूयो नाड्यो मुहूर्ता चेदसङ्ख्याभिरस्ततः ॥ १८ ॥
अस्तार्कमानतः पश्चादन्यस्तद्दिवसो भवेत् ।
सषड्भार्कदिनेऽन्यस्मिन्न षड्भानि विनिक्षिपेत् ॥ १९ ॥
अन्यत्सर्वं प्रकुर्वीत राशिरूर्ध्वमधस्ततः ।
उदेत्यन्य इति प्रोक्त उदयास्तविनिर्णयः ॥ २० ॥

इति श्रीसोमसिद्धान्ते ग्रहोदयास्तमनाधिकारः सप्तमः ॥

अर्केन्द्वोः क्रान्तिविश्लेषो युतिस्तुल्याऽन्यथादिशोः ।
तन्मौर्विकार्काद्यैर्नेन्दुस्तद्दिक्ष्वा गुणितोऽनया ॥ १ ॥
मध्याह्नश्चन्द्रभाकर्णस्तत्स्थादिक्त्वादवागुदक् ।
द्वादशघ्नाच्चजीवायां स्वर्णं लम्बज्यया भुजः ॥ २ ॥
यदं तच्छङ्कुवर्गैक्यात् कर्णः कोटिस्तु भास्करः ।
भास्करोनेन्दुकलिकाश्चन्द्रबिम्बाङ्गुलाहता ॥ ३ ॥
भचक्रार्द्धकलाभक्ता शुक्लकृष्णाविमण्डली ।
बाहुं यथादिशं कार्ष्ठां मध्यबिन्दोः प्रसारयेत् ॥ ४ ॥
वामं कृष्णं ततः पश्चान्मखीकोटिकृतं तयोः ।
मध्ये लिखेच्चन्द्रबिम्बं कोटिकर्णयुतेः स्फुटम् ॥ ५ ॥
कर्णसूत्रेण दिक् शुद्धा बिम्बापरदिशाश्रितम् ।
शुक्लं वा कृष्णसूत्रेण नीत्वा तन्मुखमत्र च ॥ ६ ॥
याम्योत्तरदिशोश्चापं लिखेच्छृङ्गोन्नतिं वदेत् ।

आदौ चन्द्रस्य दृक्कर्म कर्तव्यं दिग्विपर्ययः ॥ ७ ॥
उत्तरे च यथायोग्यमित्याहुः शास्त्रयोगिनः ॥ ८ ॥
इति श्रीसोमसिद्धान्ते शृङ्गोन्नत्यधिकारोऽष्टमः ॥

यथा तिग्मांशुचन्द्रौ स्त एकायनगतौ तयोः ।
योगे चक्रे क्रान्तिसाम्यं पातः स्यात् स च वैधृतः ॥ १ ॥
भिन्नायनगतौ भास्वच्छीतगू तद्युतौ यदा ।
भचक्रार्द्धे क्रान्तिसाम्यं मुख्यपातस्तदा भवेत् ॥ २ ॥
सूर्याचन्द्रमसौ यावदन्योन्याभिमुखं यदा ।
संघट्टनोद्भवो वह्निर्व्यतिपात इति स्मृतः ॥ ३ ॥
यच्छुभानां विनाशाय नन्दतीव पतत्ययम् ।
व्यतिपातः प्रसिद्धोऽत्र सञ्ज्ञाभेदेन वैधृतः ॥ ४ ॥
स कृष्णो दारुणवपुर्लोहिताक्षो महोदरः ।
सर्वारिष्टकरो रौद्रो भूयो भूयः प्रजायते ॥ ५ ॥
संस्कृतायनभागार्कचन्द्राभ्यां यत्तदीदृशम् ।
लक्षणं भवति प्राज्ञैर्मुख्यपातस्ततोऽपि च ॥ ६ ॥
संस्कृतायनभागार्कचन्द्रयोराशिसंयुतौ ।
भार्द्धत्वे भगणत्वे वा क्रान्तिसाम्योदितायने ॥ ७ ॥
यतो द्वितीयसंक्रान्तिर्ग्रहक्रान्तिगते गतिः ।
क्रान्तिसाम्ये मध्यकालस्तद्भुक्तौ ज्यान्तरेण च ॥ ८ ॥
स्थित्यर्द्धमानयोगार्द्धं तेनाद्यन्तं यथोचितम् ।
विष्कम्भादौ सप्तदश तृतीयांशस्य रक्षवेत् ॥ ९ ॥

योगेशौ च व्यतिपातः प्रज्वलज्ज्वलनाकृतिः ।
व्यतिपातोऽत्र यो घोरः सर्वशोभननाशनः ॥ १० ॥
स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः ।
प्राप्यते सुमहत्पुण्यं तत्कालज्ञानतस्तथा ॥ ११ ॥
इति श्रीसोमसिद्धान्ते चतुर्थे पाताध्यायो नवमः ॥

अमृतांशुश्च भगवान्मनसालोच्य यज्जगत् ।
दृश्यते सर्वमेवैतदिदं वचनमब्रवीत् ॥ १ ॥
अहमेव परं ब्रह्म परमात्माजरामरः ।
अव्यक्तो निर्गुणः साक्षी कूटस्थो यो निरञ्जनः ॥ २ ॥
अनादिपुरुषो ऽनन्तो ह्यवाङ्मनसगोचरः ।
सत्य एव परं ज्योतिरद्वितीयश्च केवलः ॥ ३ ॥
आनन्दकायकरणविहीनो निर्भयः शिवः ।
अणोरणीयान् महतो महीयान् ज्ञानविग्रहः ॥ ४ ॥
मनसः सलिलं जातं तस्मिं सर्वं प्रतिष्ठितम् ।
मय्येव लीयते सर्वं नात्र कार्या विचारणा ॥ ५ ॥
अनादिर्मम पीयूषा प्रकृतिर्विश्वकारणम् ।
प्रोक्तमप्याकृतिर्नाम्ना स्नानसन्यासदद्भुतम्(१) ॥ ६ ॥
नो भिन्नं नाप्यभिन्नं च कुतश्चिद्भिन्नमेव न ।
भिन्नाभिन्नं च नो येषां वयं वा न भवानपि ॥ ७ ॥
नोभयं केवलं स्वच्छं ब्रह्मात्मैकत्ववद्ग्रही ।
तमो नीहारकल्पान्ते नहि वेत्ति स्फुटास्फुटम् ॥ ८ ॥

(१) सा च सत्यासदद्भुतम् ॥

व्योम शब्दवती मात्रा भिन्नं तच्छब्दमात्रतः ।
स्पर्शतन्मात्रानिलोभूद्रूपतन्मात्रपावकः(?) ॥ ९ ॥
रसतन्मात्रकादापो गन्धतन्मात्रभूरतः ।
ततत्समन्विता मात्रा एत्य सर्वं प्रजायते ॥ १० ॥
अपञ्चीकृतभूतेभ्य एतेभ्यः सोत्र पञ्चकम् ।
वाक्पञ्चकं च चैकं स्यादेकैकं जायते पुनः ॥ ११ ॥
तत्र पञ्चमहाभूतसंयुक्तो ज्ञानशक्तितः ।
क्रियाशक्तिर्मनः प्राणस्त्वासीच्चैतच्चतुर्विधम् ॥ १२ ॥
प्राणो दशविधः सप्तदशभिः शब्दपूर्वकैः ।
लिङ्गं सूक्ष्मभूत् तेन भक्तार्तो वर्त्तते सदा ॥ १३ ॥
अपञ्चीकृतभूतानि समाश्रित्य परः पुमान् ।
आकाशवायुतेजोम्बुभूमिरेवं ससर्ज्ज सः ॥ १४ ॥
एषां दशमे चैकं तत्तदृण्डमपड्मुखम् ।
मयि पञ्चीकृतं भूतं स्वल्पकार्यगुणान्वितम् ॥ १५ ॥
अन्ये गुणैकवृद्धिः स्यान्महत्त्वात् करणस्य च ।
करणात्त्वांशकार्यस्याप्यल्पत्वादिति निर्णयः ॥ १६ ॥
अनन्तरं तुमुत्क्षानां प्रोक्तानीया तथा मही(?) ।
भूमीरूपात्समुत्थितब्रह्मात्मनिशस्त्वयंदम्(?) ॥ १७ ॥
हैमानामण्डकादीनां सर्वमन्तस्तमो मतः ।
हिरण्यगर्भोहं नाम्ना तत्राग्रेसचरन्महान् ॥ १८ ॥
पश्चानन्महङ्कारं ब्रह्माणं सृष्टवान् विभुः ।

वेदान् वरासने तस्मिन् सर्वलोकपितामहे ॥ १९ ॥
स च स्वयंभूः सर्वात्मा तत्र गत्वा वनं समाः ।
स्वयमेवात्मनो ध्यानं तदण्डमकरोद् द्विधा ॥ २० ॥
ताभ्यां स शकलाभ्यां च यावद्भूमिं च निर्ममे ।
मध्ये दिशोऽन्तरिक्षं च शाश्वतं स्थानमव्ययम् ॥ २१ ॥
चक्षुषोऽग्निर्दिवानाथं मनसा चन्द्रमा अपि ।
तेजोभूखाम्बुवातेभ्यः क्रमाद्भ्भादरकादिकम् ॥ २२ ॥
स सर्वं बिभिदे व्योम पुनर्द्वादशधा क्रियात् ।
चकार नामानमात्मानमहंकारो भरूपिणाम्(?) ॥ २३ ॥
विभज्य कृतवान् सूक्ष्मं ततो विश्वं चराचरम् ।
निर्ममे देवपूर्वं तु गुणकर्म तदादिकम् ॥ २४ ॥
समन्तादण्डमध्ये ऽस्मिन् भूगोलो व्योम्नि तिष्ठति ।
तदन्तरे पुटाः सप्त ज्ञेयाः पातालभूमयः ॥ २५ ॥
निरयास्तदधोऽधो वा अष्टाविंशतिकोटयः ।
तदूर्ध्वं षट्भुवर्लोकाः शोभन्ते तस्य पार्श्वतः ॥ २६ ॥
ग्रहतारादिलोकास्ते तत्र तत्र स्वरादयः ।
तिष्ठन्त्याधारशक्त्या च तत्तद्दंजनान्विताः ॥ २७ ॥
भूगोलमध्यगो मेरुरुभयत्र विनिर्गतः ।
मन्विन्द्रवेदमुनय ऊर्ध्वाः स्रोतस उत्तमाः ॥ २८ ॥
ऊर्ध्वशृङ्गे वसन्त्येते मध्यशृङ्गे महासुराः ।
अधः स्रोतस एवान्ये मध्यस्रोतस्थितो गिरिः ॥ २९ ॥

वर्णाब्धिर्गां परित्य स्थितोऽस्या मेखलेव हि ।
तन्मध्ये यमकोटिश्च पुरी लङ्का च रोमका ॥ ३० ॥
पूर्वाद्या च सिद्धपुरी भूपादान्तरितास्तु ताः ।
पुरोमेवान्तरं विद्धि भूपादं विद्धि शौनकम् ॥ ३१ ॥
सर्वेप्यूर्ध्वस्थिताकाशाद्दल्पकायाश्च भूतलम् ।
पश्यन्ति चक्राकारं तु न कपित्थोपमं मुने ॥ ३२ ॥
उपर्यात्मानमपरे तिर्यगन्ये महीतले ।
अधोगालं कल्पयन्ति तेषां क्वोर्ध्वं क्व चाप्यधः ॥ ३३ ॥
उक्तानां विषुवत्यूर्ध्वं पुराः खेटा व्रजन्त्यमी ।
न तासु विषुवच्छाया व्यक्तदेशः स तु स्मृतः ॥ ३४ ॥
ततः स्थानाद् ध्रुवो मेरोरूर्ध्वस्थोपि च लक्ष्यते ।
स्थिताविव प्रतीयेते मेरोस्तद्दृङ्मण्डलम् ॥ ३५ ॥
ध्रुवोन्नतिं भचक्रस्य नतिरक्षमितिः परा ।
लम्बतुल्यात्वभिमुखं यावद्विद्धि तदुन्नतिम् ॥ ३६ ॥
भचक्रध्रुवयोर्मध्ये प्रक्षिप्ताः प्रवहानिलैः ।
व्रजन्त्यजस्रं सन्नद्धा ग्रहकक्षा यथाक्रमम् ॥ ३७ ॥
पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः ।
जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः ॥ ३८ ॥
प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहङ्गतिः ।
परिणाहवशाद्भिन्नास्तद्वशाद्भानि भुञ्जते ॥ ३९ ॥
सव्यं भ्रमति देवानामपसव्यं सुरद्विषाम् ।

उपरिष्टाद्भगोलोऽयं व्यक्ते पश्चान्मुखः सदा ॥ ४० ॥
चुम्बकोभ्रमिन्यायेन उच्चपाता अदर्शनाः ।
ग्रहा नानागतिं कुर्युर्देवता भगणाश्रिताः ॥ ४१ ॥
प्रवहः श्वसनश्चैतान् स्वोच्चाभिमुखमीरयेत् ।
एवं यत् प्राङ्मुखं यान्ति तद्गनं ऋणमन्यथा ॥ ४२ ॥
दूरस्थितः स्वशीघ्रोच्चाद्ग्रहः शिथिलरश्मिभिः ।
सव्येतराकृष्टतनुर्भवेद्वक्रगतिस्तदा ॥ ४३ ॥
नृपषड्वर्गपञ्चाशदत्यष्टीषुरसैः कुजात् ।
अन्यकेन्द्रांशनीचांशैर्वक्रिणो यान्ति पातवत् ॥ ४४ ॥
वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा ।
तथा शीघ्रातिशीघ्राख्या ग्रहाणामष्टधा गतिः ॥ ४५ ॥
मन्दादिपञ्चसंज्ञाश्च वक्रे चान्यैः प्रकीर्तिताः ।
पातोपभोगः खेटानामुत्तराभिमुखं नयेत् ॥ ४६ ॥
ग्रहाः प्राग्भगणार्द्धस्था दक्षिणाभिमुखं तथा ।
पाताभ्यामपकृष्यन्ते शीघ्रोच्चं बुधशुक्रयोः ॥ ४७ ॥
तच्छीघ्राकर्षणात्तौ तु विक्षिप्येते यथोक्तवत् ।
अतो ग्रहस्य क्षेपान्ते स्वकान्त्यन्तात्प्रसार्यते ॥ ४८ ॥
भूवृत्तं क्रान्तिभागघ्नं भगणांशविभाजितम् ।
अत्रात्मयोजनैर्व्यत्यादुपरिस्थो ग्रहो व्रजेत् (?) ॥ ४९ ॥
मेषादावुदितः सूर्यस्त्रीन् राशीनुदगुत्तरः ।
सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम् ॥ ५० ॥

कर्क्यादीन् सञ्चरंस्तद्वदह्नः पश्चार्द्धमेव सः ।
तुलादींस्त्रीन् मृगादींस्त्रींस्तद्वदेव सुरद्विषाम् ॥ ५१ ॥
अतो दिनक्षये सायमयनान्तो विपर्ययात् ।
व्यक्षोद्गमं च तिर्यक्त्वात्त्रिंशता च क्षपाप्यहः ॥ ५२ ॥
पुरतो भूचतुर्थांशं स्वस्थानाद्वासयद्रविः ।
तत्तद्दिग्भ्यां तत्तद्दिशामुखं सञ्चरयन्नपि (?) ॥ ५३ ॥
तत्तत्पश्चिमभूपादे उदङ् मेरोस्तु दक्षिणे ।
मध्योदयार्द्धरात्रास्तकालान् कुर्याद्रविः क्रमात् ॥ ५४ ॥
अन्यत्र देवभागे तु ह्रासवृद्धी दिवानिशोः ।
अनेन प्रत्यहं याम्ये व्यस्तं देवेऽन्यथान्यथा ॥ ५५ ॥
भूमण्डलात् पञ्चदशे भागे सौम्यायने द्वयोः ।
नाडीषष्ट्या सकृद्रात्रिर्देवे ऽन्यत्र दिवा भवेत् ॥ ५६ ॥
अन्यथा अयनात्पातोपरतोयं भसञ्चयः (?) ।
वर्तते विपरीतो हि स्पष्टक्रान्त्युद्भवो ह्युदक् ॥ ५७ ॥
याम्यं चेति पुनस्तस्मात्तन्मेरोः सन्ति योजनैः ।
परतो वासरस्यापि सदा वृद्धिक्षयो भवेत् ॥ ५८ ॥
अस्तोन्मण्डलमूर्ध्वस्थाः पितरो दर्शनिर्गमे ।
स्वोपर्यर्कं प्रपश्यन्ति तन्मासं पैतृकं दिनम् ॥ ५९ ॥
कल्पेन्दुभगणाः क्षुण्णाः खत्रयाब्धिद्विपावकैः ।
आकाशकक्षा सा कक्षा भक्ताकल्पभसञ्चयैः ॥ ६० ॥
कल्पभूवासरैः सर्वभुक्तियोजनमेव सा ।

युक्ता गतिकलाः षष्टिः क्ष्मार्ककक्षा च पश्चिमः ॥ ६१ ॥
व्यासार्द्धयुक्तसंघाती कर्णाद्धीना तदुन्नतिः ।
सन्त्येव ज्योतिषां योगाद्धतकल्पा फलाय सा ॥ ६२ ॥
कृत्वा समन्तु भूगोलमभीष्टं दारवन्ततः ।
आधारकक्षाद्वितयं कक्षा विषुवती तथा ॥ ६३ ॥
भगणांशाङ्गुलैस्तत्र क्रान्त्यन्ताद्यङ्गुलैरपि ।
अयनाद्यनं क्रान्तिः कक्षान्ते स्वध्रुवादिकम् ॥ ६४ ॥
आच्छाद्य शुक्लवस्त्रेण यन्त्रयुक्तान् ग्रहादिकान् ।
न्यस्तक्षितिजवृत्तं च कृत्वा यन्त्रं च कालवित् ॥ ६५ ॥
भूमिं यद्वङ्गभिर्यन्त्रं प्रत्यक्षेणाखिलं गतम् ।
यस्य कृत्वोपरि स्थानमात्मनस्तत्र संस्थितिः ॥ ६६ ॥
कालान्ते भग्नमखिलं कृत्वा दृष्ट्वा ग्रहादिकम् ।
नष्टे दिवे दिवा रात्रौ लोकत्रितयगे क्षये ॥ ६७ ॥
शेते ब्रह्मा स्वयं पत्रे न्यग्रोधस्य क्षपाश्रये ।
महानिव दिवापूर्णे मही संमुद्रिताखिला ॥ ६८ ॥
सृष्ट्वा पुनर्जगत् सर्वं करिष्यति यथातथम् ।
शक्तिमात्रं च शेषं तत् जगच्च प्रतिसञ्चरेत् ॥ ६९ ॥
स्वस्वकर्मानुरूपं तु यथापूर्वं तथोद्भवम् ।
ब्रह्मणः शरदां पूर्णे शतशो याति तज्जगत् ॥ ७० ॥
सर्वं कार्यं कारणे स्वे लीयते सर्वकारणम् ।
मायाशबलितं ब्रह्म पुनः सृष्टिं करिष्यति ॥ ७१ ॥

तत्त्वमस्यादिवाक्यैर्यत् सम्यक्ज्ञानं प्रजायते ।
तेन नश्यति सा माया नान्यथा कोटिकर्मभिः ॥ ७२ ॥
विनष्टोव्याकृतं स्वस्थानिरूपपरमात्मतम्(?) ।
कूटस्थमोच इत्युक्तं चित्तं तत्र विचारय ॥ ७३ ॥
समाधिमार्ग एवायं संसारजयकारणम् ।
एतद्ध्यायन् बुद्धिमान् स्यात्(?) कृतकृत्यः स एव हि ॥ ७४ ॥
इति गुह्यतमं शास्त्रं भुक्तिमुक्तिफलप्रदम् ।
अधिगम्य ततः सोमाच्छौनकः पूर्णमानसः ॥ ७५ ॥
लब्धदेहास्य देहैस्य पूर्णचक्षुः पुनः पुनः ।
नमस्कृत्वा भिषादेव्या विवशो गद्गदस्वरः ॥ ७६ ॥
तुष्टाव शान्तः स्वगुरुं शान्तं सविग्रहं मुनिम् ।
जय चन्द्रात्मतांशो भो जय शङ्करभूषण ॥ ७७ ॥
जय सर्वज्ञ सर्वात्मन् जय सर्वेश्वर प्रभो ।
कृतार्थोहं कृतार्थोहं पुण्योहं पूतविग्रहः ॥ ७८ ॥
धन्योहं वीतशोकोहमित्योंब्रह्माहमेव च ।
अच्छेद्योहमदाह्योहममकं हमहं शिवम्(?) ॥ ७९ ॥
अहं विष्णुरहं ब्रह्मा शक्रोहमहमंशुमान् ।
अहमग्निरहं व्योम सर्वमेतदहं जगत् ॥ ८० ॥
त्वत्प्रसादाद्गृहश्रेष्ठ एवमेतदवैम्यहम् ।
त्राहि मामिति संप्रार्थ्य प्रणिपत्य पुनः पुनः ॥ ८१ ॥
गुरुं समर्चयामास गन्धपुष्पाक्षतादिभिः ।

दक्षिणां च हिरण्यं च वस्त्रभूषणपूर्वकम् ॥ ८२ ॥
अभिवाद्य नमस्कृत्य *******(१) ।
ज्ञात्वेदं मुनयः सर्वे सोमाख्यमनोरथम् ॥ ८३ ॥
प्रतिपद्यापुरित्यन्यं ज्ञानं पप्रच्छुरादरात् ।
स तेभ्यः प्रददात् प्रीतः सम्यक्ज्ञानमनिन्दितम् ॥ ८४ ॥
तदेव देवस्तद्ब्रह्म वेदचक्षुः परं शुभम् ।
अध्येतव्यं सदा विप्रैरुत्तमैर्वेदवादिभिः ॥ ८५ ॥

इति श्रीसोमसिद्धान्ते चतुर्थे गोलाध्यायो दशमः ॥

समाप्तोऽयं ग्रन्थः ॥

---

(१) जगाम स्वाश्रमं ततः । इत्यनुमीयते ॥

॥ श्रीः ॥

ॐ नमः परमात्मने ।

---

# ब्रह्मसिद्धान्तः ।

ब्रह्मणा विरचितः ।

---

ध्यानयोगसमारूढं ब्रह्माणं त्रिजगद्गुरुम् ।
अभिवाद्य सुखासीनं नारदः परिपृच्छति ॥ १ ॥
देवदेव जगन्नाथ सर्वज्ञ कमलासन ।
ज्योतिषां चरितं ज्ञानं ब्रूहि कालाश्रयं महत् ॥ २ ॥
अधीतमखिलं छन्दः स्थाणुरूपं प्रतीयते ।
अङ्गैर्विना यथैवाङ्गी तस्मादेतत् प्रसीद मे ॥ ३ ॥
इत्येवमुक्तो विश्वात्मा नारदेन महर्षिणा ।
पुत्रेण धीमता प्रीत्या वाक्यमेतदभाषत ॥ ४ ॥

ब्रह्मोवाच ।

साधु साधु महाभाग यन्मां त्वं परिपृच्छसि ।
विस्तरेण प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ५ ॥
नारायणः सुरश्रेष्ठो वेदाकारेण वर्तते ।
छन्दःशास्त्रं तस्य पादौ कल्पः पाणी मुखं तथा ॥ ६ ॥

शब्दशास्त्रं श्रोत्रयुग्मं निरुक्तं घ्राणमेव च।
शिक्षाशास्त्रं ज्यौतिषं तु नयनं श्रेष्ठमेव च॥ ७॥
एतैरङ्गैरसावङ्गी राजते वेदविग्रहः।
प्रधानमङ्गमेवेदमङ्गेष्वेष्वेव षट्सु च॥ ८॥
एतच्च मत्तः शौतांशोः पुलस्त्याच्च विवस्वतः।
रोमकाच्च वसिष्ठाच्च गर्गादपि बृहस्पतेः॥ ९॥
अष्टधा निर्गतं शास्त्रं स्वयं परमदुर्लभम्।
एतेऽपि कालाधीनानि ज्ञानानि विदुरीश्वराः॥ १०॥
गतागतं चिरं कार्यं कालस्तत्प्रभवाश्रये ?)।
हेतुः कारणकालोऽसौ सर्वाधारश्चिविक्रमः॥ ११॥
तत्कार्यं कालकलनं वक्ष्यते नारदोऽधुना।
अष्टादश निमेषास्तु काष्ठा त्रिंशत् तु ताः कला॥ १२॥
तासां त्रिंशत् क्षणस्तेऽपि षट् नाडीति प्रशस्यते।
यद्वा गुर्वक्षराणां तु दशकं प्राण उच्यते॥ १३॥
षड्भिः प्राणैर्विनाडी तु तत्षष्ट्या घटिका तथा।
श्वासः प्राणस्तु सर्वेषां तदायुस्तेन निर्दिशेत्॥ १४॥
नाडीषष्ट्या त्वहोरात्रं(१) मासस्त्रिंशता भवेत्।
मानमात्रमिति प्रोक्तं सावनाद्यमथोच्यते॥ १५॥
उदयादुदयं भानोर्भूदिनं त्वत्र(२)लोकजम्।
स्यात् तेनार्कोदयो मासस्तथाऽयं सावनस्य हि॥ १६॥

(१) दिवारात्र—पा० २ पु०। (२) मर्त्य—पा० २ पु०।

भास्वद्वियोगतश्चन्द्रो यावतैति रविं पुनः ।
स्यात् तावानैन्दवो मासस्तिथीनां त्रिंशता च सः ॥ १७ ॥
तत्पूर्वोत्तरपक्षौ तु स्वतः सिद्धौ सितासितौ ।
कृत्तिकादिद्वन्द्वगतात् पूर्णेन्दोः कार्त्तिकादयः ॥ १८ ॥
त्रिधा मासा उपान्त्यान्त्यप्रथमास्तु(१) त्रयोऽत्र हि ।
पितरश्चन्द्रबिम्बस्था अग्निष्वात्तादयो रविम् ॥ १९ ॥
उदितं कृष्णपक्षार्धे पश्यन्त्यन्यत्र चास्तगम् ।
अहोरात्रं तत् पितॄणां चान्द्रो मासः प्रकीर्त्यते ॥ २० ॥
मासपक्षावसाने तु तद्दिवारात्रिमध्यमौ ।
संक्रान्त्या सौरमासस्तु मासद्वयमृतुर्भवेत् ॥ २१ ॥
वर्षं षडृतवो दिव्यमहोरात्रं च तन्मुने ।
कपित्थाकारभूगोलमध्यगो मेरुपर्वतः ॥ २२ ॥
नानारत्नचयो हैम उभयत्र विनिर्गतः ।
तस्योपरिष्टान्मन्विन्द्रामरास्तस्मान्महर्षयः ॥ २३ ॥
अधस्तादसुरास्तद्वन्महाबलपराक्रमाः ।
ग्रहो मेषायने प्रोद्यत्संचरन्नुदगुत्तरम् ॥ २४ ॥
पूरयेत् प्रागहर्मध्यं देवानामृतुभिस्त्रिभिः(२) ।
याम्यायनाद्यैस्त्रिगृहैरह्नः पश्चार्धमेव सः ॥ २५ ॥
तथा तुलाद्यैर्दैत्यानामपि सौम्यायनादिभिः ।

---

(१) उपान्त्यान्त्यपञ्चमास्तु—पा० १-२ पु० ।
(२) राशिभिस्त्रिभिः—पा० २ पु० ।

सुरासुराणामन्योन्यमहोरात्रं विपर्ययात् ॥ २६ ॥
दिवारात्रिप्रमाणं च भानोर्भगणपूरणात् ।
विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ॥ २७ ॥
तत् त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते ।
तुलादिषडशीत्यंशैः षडशीतिमुखं दिनम् ॥ २८ ॥
तच्चतुष्टयमेव स्याद्द्विस्वभावेषु राशिषु ।
षड्विंशे धनुषो भागे द्वाविंशे निमिषस्य च ॥ २९ ॥
मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे ।
ततः शेषाणि कन्यायां यान्यहानि तु षोडश ॥ ३० ॥
क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम् ।
यत्र क्षेत्रे भवेत्तस्य षडशीतिमुखं(१) दिनम् ॥ ३१ ॥
षडशीतिमुखं नाम तस्य क्षेत्रस्य कीर्त्यते ।
सौम्ययाम्यायने यत् स्यात् क्षेत्रं तदयनाभिधम् ॥ ३२ ॥
त्रिकूटशृङ्गाग्रे मध्यदेशा(२)दुपरिष्टाद्दिवाकरः(३) ।
तुलामेषायने यान्ति ग्रहा यद्विषुवच्च तत् ॥ ३३ ॥
चरस्थिरद्विस्वभावफलैस्ते च मृगादयः ।
शिशिरादिगुणैर्द्वैः पुनश्च शिशिरादयः ॥ ३४ ॥
स्थिरं विष्णुपदं चेति तन्नाम स्थिरभं स्मृतम् ।
मेषचैत्रादिमासास्तु मध्वाद्या इति कीर्तिताः ॥ ३५ ॥

---

(१) भवेदेतत् षडशीतिमुखं—पा० १ पु० ।

(२) मध्यशृङ्गा—पा० १ पु० । (३) विवस्वतः—पा० १ पु० ।

क्वचिद्दैतैर्वसन्तादया यजमानेच्छया पुनः ।
संपरोद्न्वितादयास्तु(१) वत्सराः प्रभवादयः ॥ ३६ ॥
प्रमाथी प्रथमं वर्षं सौरं कल्पस्य सर्वदा ।
दिव्यैरहोभिर्ब्राह्मैर्वा वर्षज्ञानं पुरोक्तवत् ॥ ३७ ॥
दिव्याब्दानां सहस्राणि द्वादशैव चतुर्युगम् ।
युगस्य दशमो भागश्चतुस्त्रिद्व्येकसङ्गुणः ॥ ३८ ॥
क्रमात् कृतयुगादीनां षष्ठांशः सन्धयः स्वकाः ।
युगेषु तत्र(२)वर्तन्ते गतागतयुगस्थितौ ॥ ३९ ॥
कृतादीनां व्यवस्थेयं धर्मपादव्यवस्थया ।
सन्ध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् ॥ ४० ॥
चतुर्युगाणां सैका स्यात् सप्ततिर्मनुसञ्चरः ।
कृताब्दसंख्या तस्यान्ते संविधात्री जलप्लवः ॥ ४१ ॥
मन्वन्तरव्यवस्थेयं प्राजापत्यमुदाहृतम् ।
कल्पे ससन्धयो ज्ञेया मनवस्ते चतुर्दश ॥ ४२ ॥
कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः ।
इत्थं युगसहस्रेण भूततारादिमानकः ॥ ४३ ॥
संहारकारकः कल्पः कथितस्तत्र नारद ।
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ॥ ४४ ॥
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ।

(१) संपरीदान्विदाद्यास्तु—पा० १–२ पु० ।
(२) युगपत् तत्र—पा० १ पु ।

यावद्ब्रह्माखिलं विश्वं तावत् तिष्ठति तिष्यतिः ॥ ४५ ॥
शतायुः पुरुषः सर्वः स्वयाऽहोरात्रसंख्यया ।
ग्रहर्क्षदेवदैत्यादि प्रतिकल्पं चराचरम् ॥ ४६ ॥
कृताद्रिवेदैर्दिव्याब्दैः शतघ्नैः ४७४०० सृज्यते मया ।
ज्यापिण्डमध्ये परिधिक्रमेण लवणार्णवः ॥ ४७ ॥
मेखलावस्थितस्तस्या देवासुरविभागकृत् ।
योजनानां शतं त्रिंशद्युतं तस्यापि विस्तरः ॥ ४८ ॥
तन्मध्ये तुल्यभागेन तु स्वर्णप्राकारतोरणाः ।
चतस्र एताः पूर्वाद्या नगर्यो देवनिर्मिताः ॥ ४९ ॥
यमकोटिश्च लङ्का च रोमकं सिद्धपुर्यपि ।
उपरिष्टाद्व्रजत्यासां भचक्रं ग्रहसंयुतम् ॥ ५० ॥
विशेषाद्विषुवत्यर्के लङ्कास्था विषुवत्प्रभा ।
पुष्कराद्द्वीपमध्यस्थे महापुष्करभूरुहे ॥ ५१ ॥
तिष्ठता सिद्धपुर्यां तु ग्रहाः संस्थापिता मया ।
कल्पादौ सृष्टिकाले तदुपर्येव तदादिषु ॥ ५२ ॥
मध्योदयार्धरात्र्यस्तकाले वारः प्रजायते ।
तदा पश्चान्मुखं सर्वं ग्रहनक्षत्रतारकाः ॥ ५३ ॥
सृज्यन्ते खाभ्रभूपक्षिकासुभिः २१६००(१) सावनोद्भवैः ।
ग्रहनक्षत्रताराणां समोद्गमनकारणात् ॥ ५४ ॥

(१) सृजन्तेमामभूपादेष्वसुभिः—पा० १ । २ पु० ।

पूर्वोक्तासु दिनं त्रिंशन्नाडिकं नक्तमप्यथ ।
विषुवत्युदयस्थानात् प्राक्प्रत्यक्पश्चिमोत्तराः(१) ॥ ५५ ॥
प्राग्दक्षिणेन ककुभस्तत्स्वस्य त्रिनिर्दिशेत् ।
एवमुक्तपुरीभ्योऽयमुत्तरो मेरुरामरः ॥ ५६ ॥
असुरो दक्षिणः काष्ठा नियमो न तयोः समः ।
लिप्तासु चक्रतुल्यासु दृश्यते सकलं यदि ॥ ५७ ॥
विषुवद्दिवसे भूस्थे तावतीने कुतो दिशः ।
इति पर्यटतां यो यन्नाति यद्यदुडून्यपि ॥ ५८ ॥
अतोऽत्य तत्समा याति यत्प्रत्यक् प्राग्गतिश्च सा ।
तुल्यमानातिक्रमणं तावत्याऽय(२) स्वकक्षया ॥ ५९ ॥
ऊर्ध्वं तत्परिवर्तेन पौष्णान्ते भगणः स्मृतः ।
सर्वत्रेच्छाफलवधे प्रमाणाप्तं च तत् फलम् ॥ ६० ॥
जात्यच्छामानसाध्यं दोःकोटिवर्गयुते पदम् ।
कर्णो दशपदाभ्यस्तो विष्कम्भात् परिधिर्भवेत् ॥ ६१ ॥
हानिवृद्धिधिया मार्गं व्यत्ययादिष्टमिष्टजात् ।
युगे स्युः प्राग्गतेर्भानोर्ज्ञस्य शुक्रस्य चात्मज ॥ ६२ ॥

कुजार्किगुरुशीघ्राणां

भगणाः सूर्यवत्सराः ४३२०००० ।

---

(१) प्राच्यैवं पश्चिमादयः—पा० १ पु० ।
(२) नवातिर्वा—पा० १ पु० ।

इन्दोस्तर्काग्निरामार्थ-
सप्तशैलशरा(१) ५७७५३३६स्तथा ॥ ६३ ॥
रद्रेभतर्कगोनेत्र-
नयनानि २२९६८३२कुजस्य च ।
बुधशीघ्रस्य वै षष्टि-
खाद्रयब्ध्यङ्कमुनीन्दवः १७९३७०६० ॥ ६४ ॥
शून्याश्विनयनाम्भोधि-
षड्गुणा ३६४२२० वाक्पतेस्तथा ।
काव्यशीघ्रस्य षट्शैल-
गुणाकृतिवियन्नगाः ७०२२३७६ ॥ ६५ ॥
अष्टतर्कशरत्वब्धि-
शशाङ्काः १४६५६८ सूर्यजस्य च ।
त्रिनखेभाष्टार्णवास्तु४८८२०३
मन्दोच्चस्य निशापतेः ॥ ६६ ॥
वामपातस्य वस्वग्नि-
द्विदस्राग्नियमा २३२२३८ मुने ।
कौजात् कल्पे क्रमादिन्द्र-
करा २१४ अष्टाष्ट४८८सागराः ॥ ६७ ॥
कृतात्यष्टि१७४त्रिशून्याङ्का
९०३नासत्यर्तुरसा ६६२स्तथा ।

(१) तर्कामराग्न्यर्थसप्तशैलशराः५,७७५,३३३६—पा० १ पु० ।

प्राग्गतेः सूर्यमन्दस्य
सप्तकुञ्जरपावकाः ३८७ ॥ ६८ ॥
कौजात् कृतनखा २०४ नाग-
षड्गुणाः२६८खवियन्नव ९०० ।
शरपावकबाणाश्च ५३५
तथा नवहुताशनाः ३९ ॥ ६९ ॥
अष्टाश्वीभाद्रिविकृति-
द्व्यष्टबाणेन्दवो १५८२२३७८२८युगे ।
भोदयाः प्राग्गतेरेते
भगणैस्तु विवर्जिताः ॥ ७० ॥

पातानां भगणैर्युक्ता उदयास्तस्य कीर्त्तिताः ।
नक्षत्रोदयतः पूर्वं प्रत्यग्गतिरुदेति हि ॥ ७१ ॥

पश्चात् प्राग्गतिरेतस्मा-
द्व्रिकल्पोदया युगे ।
अर्कोनचन्द्रभगणाः

शशिमासाः प्रकीर्त्तिताः ५३४३३३३६ ॥ ७२ ॥
दिनीकृतास्ते तिथयो १६०३०००८०
भूदिनोनाः १५७७९१७८२८ क्षयक्षपाः २५०८२२५२।
अर्केन्दुमासविश्लेषो
भवेत् १५९३३३६ पुत्त्राधिमासकाः ॥ ७३ ॥

१॥

अथ चक्रकलाश्चन्द्रकक्षा पञ्चदशाहताः ३२४००० ।
व्योमकक्षा भवेदेषा कल्पेन्दुभगणाहता ॥ ७४ ॥
कक्षा ग्रहाणां सैवेह हृता चैव पृथक् पृथक् ।
स्वकल्पभगणैः कक्षाषष्टिर्भभ्रमणां रवेः ॥ ७५ ॥
स्वकक्षाव्यासभूव्यासविश्लेषार्द्धं तु मध्यमम् ।
सर्वेषां प्राग्गतिः कल्प्या भूदिनैर्व्योममण्डलम् ॥ ७६ ॥
एकस्य भूदिनस्यास्य कल्प्या प्रत्यग्गतिस्त्विह ।
छायाशङ्कू व्यासकोटी कर्णोऽतो विषुवत्प्रभा ॥ ७७ ॥
छाया या सा विषुवती स्वदेशे स्यादिहार्कजा ।
शङ्कुः स्याद्विषुवत्कर्णो यत्र न क्षीयते ततः ॥ ७८ ॥
वर्धमानो महीकर्णः [illegible]रिवर्जो निरक्षकः ।
अक्षाख्यौ द्वौ ध्रुवौ मेरोरुपरिष्टान्नभःस्थितौ ॥ ७९ ॥
भूतचन्द्रान्तरं भूमिध्रुवान्तरमपि ध्रुवम् ।
समुद्रे मध्यकक्षायाः क्षितिजस्थौ ध्रुवाविति ॥ ८० ॥
तत्रस्थाः परिपश्यन्ति दक्षिणोत्तरयोर्मुने ।
अक्षान्नतेरभावात् स व्यक्षदेश इति स्मृतः ॥ ८१ ॥
अन्यत्राक्षप्रभा यावत् तावच्चक्रस्य लम्बनम् ।
मेरोरभिमुखं यातुरुपर्युपरि दृश्यते ॥ ८२ ॥
ध्रुवस्ततस्ततश्चक्रं नीचैर्नीचैस्तु नारद ।
निरक्षाभिमुखं यातुरन्यथा तद्द्वयं भवेत् ॥ ८३ ॥

अक्षांशा नतांश ९० मेरौ व्यक्षे लम्बांशकास्तथा ।
लम्बाक्षौ दक्षिणौ ग्राह्यौ गणितेषु तथाऽपि च ॥ ८४ ॥
लम्बो ना च विभज्या चेद्वर्धमानो महीश्रव:(१) ।
वर्द्धमान: खखर्विन्दु १६०० योजनानि चिते स्तु स: ॥ ८५ ॥
भूकर्णानुगुणं तस्य ज्या शङ्कोरदर्शनात् ।
भूकर्णेष्टद्युनुगुणं नीयतेऽक्षो दिनोऽधिक: ॥ ८६ ॥
तथाऽप्यक्षोननवतेः शङ्कुर्मन्दो हि गृह्यते ।
अक्षादिलोमगमनाल्लम्बाक्षावधिकोनकौ ॥ ८७ ॥
अक्षज्यात्रिज्ययोः श्लेषो यदाऽनक्षय इत्यथ ।
लम्बो हि भवता(२) तत्र गृह्यते तर्हि यत्नत: ॥ ८८ ॥
तदृष्टच्छायानुगुणं लोके सुसिद्धं तन्निराकृतम् ।
स्यात् सुसाधयिता स्वेष्टः स्वाध्यायस्तदुपाधयः ॥ ८९ ॥
तस्मात् पञ्चम सिद्धान्तेषूक्तमार्गोऽवधार्यताम् ।
इतं मयूखं विषवज्ज्मभ्रमनाऽज्यं विषं तथा ॥ ९० ॥
संसर्गस्य विशेषेऽपि तथैतदनुमीयते ।
मध्याह्ने विषुवत्यर्कस्तस्याक्षांशा नतांशका: ॥ ९१ ॥
तन्नतात् पलभा चान्तः साऽक्षच्छाया प्रकीर्त्यते ।
चक्रखिन्नार्धवर्गस्य दशमं करणोपदम् ॥ ९२ ॥

---

(१) हि तच्छ्रव:—पा० १ पु० ।
(२) लम्बो चाक्षो हि भवता—पा० २ पु० ।

व्यासार्धं तु चतुर्विंशो ज्यार्धपिण्ड इतीर्यते ।
वृत्तस्य षण्णवत्यंशो दण्डवद्यः २२५ समः स तत् ॥९३॥
प्रथमं ज्यार्धमेवैतद्द्वितीयानकरणीपदम् ।
(१)त्रयोविंशो ज्यार्धपिण्डः परखण्डान्तरं ज्ययोः ॥९४॥
द्विघ्नेष्टहीना खण्डज्या यत्रार्धेन्दुयुता न चेत् ।
खण्डे शताधिके नेत्रवियद्वेदैर्युता तु चेत् ॥ ९५ ॥
खाद्रिनेत्रखखण्डा स्यादेष्यखण्डयुता सती ।
खखण्डरहिता जीवा स्यात् पूर्वज्या तु मौर्विका ॥ ९६ ॥
प्रायो दशैव सन्त्यासां मध्येकादशवर्जिताः ।
हित्वा कुखण्डमूलानि ततान्याः स्युर्यथोदितम् ॥ ९७ ॥
यद्वाऽस्य भान्त्ये ज्ये तत्र गुणषट्चन्द्रसंयुते ।
द्वितीयभान्त्यजास्तिस्रो नगगोवह्निसंयुताः ॥ ९८ ॥

---

(१) एते ९४—१०३ श्लोका वक्ष्यमाणप्रकारेण साधवो भवितुमर्हन्ति परन्तु आदर्शानुरोधेन मूले तथैव स्थापिता इति विज्ञेयम् ।

त्रयोविंशो ज्यार्धपिण्डः परखण्डोऽन्तरं ज्ययोः ॥ ९४ ॥
द्विघ्नेष्टहीना खण्डज्या पञ्चार्थाब्धिमिता न चेत् ।
खण्डः स्वेष्टाधिको यत्र विगतस्त्वन्यथा तु चेत् ॥ ९५ ॥
स्वाग्रिमोऽत्र स्वखण्डः स्यादेष्यखण्डाभिधः स तु ।
स्वखण्डरहिताज्जीवा स्यात् पूर्वज्या तु मौर्विका ॥ ९६ ॥
प्रायो दशैव सन्त्यासां मध्ये द्वादशवर्जिताः ।
द्विघ्न्याः करण्या मूलार्धं ततोऽन्याः स्युर्यथोदितम् ॥ ९७ ॥
यद्वाऽऽद्यभान्त्यजे ज्ये च गुणपञ्चेन्दुसंयुते ।
द्वितीयभान्त्यजास्तिस्रो नगस्वर्वह्निसंयुता ॥ ९८ ॥

तत्पञ्चमी खखान्त्याद्या चेज्ज्याप्राग्वत् ततः स्फुटा ।
इत्येतौ द्वौ च सामान्यौ मार्गौ नानागुणैर्युतौ ॥ ९९ ॥
विक्रत्यधिकचक्रान्त्यासार्धमार्गस्य किन्नु यत् ।
आद्यमार्गे त्रिभज्यार्धं प्रथमज्या न यद्भवेत् ॥ १०० ॥
करणीपदपादोनकरणीदलमेव(१) हि ।
एकद्विभज्याद्वादशीज्या करणीज्यापदं किल ॥ १०१ ॥
एवं तस्माद्द्वितीयमार्गे तत्सर्वानुगुणः स्फुटः ।
वर्गो निरूप्यते प्रोक्ता त्रिज्या प्राग्वत् करण्यपि ॥ १०२ ॥
चक्रस्य षण्णवत्यंशो विलिप्ताश्रयकोऽन्ततः(२) ।
प्रथमज्यार्द्धमेतस्माद्द्विकृति(३)ज्या पुरोक्तवत् ॥ १०३ ॥
(४)द्विघस्य खण्डहोनाख्या नवाब्धिन्नियुतान्त्यभे ।
तदाब्धिद्वितयव्योमवह्निनेत्रयुतं क्रमात् ॥ १०४ ॥

---

तत्पञ्चमी स्वखण्डाद्या स्याज्ज्या प्राग्वत् ततः स्फुटा ।
इत्ये- ... ... ... ॥ ९९ ॥
विस्तृत्यधिक ... ... ।
प्रथमज्या तु यद्भवेत् ॥ १०० ॥
करणीपदपादोनकरणीपद-(मूल-) मेव हि ।
एवं द्विभज्या त्रिज्या तु करणीतः पदं किल ॥ १०१ ॥
एवं स्यादाद्यमार्गस्तु न सर्वानुगुणः स्फुटः ।
वर्गो निरूपितः प्रोक्ता त्रिज्या प्राग्वत् करण्यपि ॥ १०२ ॥
चक्रस्य षण्णवत्यंशो भलिप्ताश्रयकस्य तु ।
प्रथमज्यार्धमेतस्माद्द्विकृतिज्या पुरोक्तवत् ॥ १०३ ॥

(१) करणीमुखमेव—पा० २ पु० । (२) अभिन्नः ।
(३) त्रयोविंशी ज्या इति ।
(४) इतोऽग्रेऽध्यायसमाप्तिपर्यन्तं स्पष्टार्थः ।

यद्वात: खण्डसंशुद्धिलिप्ता योज्या: क्रमाच्च ता: ।
सप्तविश्वैर्नगाष्टाभीरसशैलैर्नगाभिधै: ॥ १०५ ॥
अतिधृत्यावाद्रिशैलैरसांभोधिन्निभिस्तत: ।
द्वितीयभान्ते याज्याख्या युगनेत्रेन्दुसंयुता: ॥ १०६ ॥
तत्पञ्चमीसेतसूर्यात् तस्यूर्ध्वेष्टशैलभाक् ।
सेन्द्रातत्र तृतीयाद्याद्वितीये द्वादशोन्विते ॥ १०७ ॥
आद्यमेन्त्याखट्टभागा विश्वाद्रिश्च स्फुटाध्वनि ।
तत्सप्तमी खभेत्याद्या तत्षष्ठी रदवर्जिता ॥ १०८ ॥
तत्पञ्चमी चतुर्थी सा खात्यष्टिगोग्निसंयुता ।
तृतीया विकला सा तत्फलं भूतिथिसंयुतम् ॥ १०९ ॥
द्वितीया यत्फलं वेदविकलाद्यभथोक्तवत् ।
सस्फुटज्याविधिस्त्रात्रोत्क्रमज्याखण्डमष्टमम् ॥ ११० ॥
ज्यात्वाभावानुलोम्येन सषड्वर्गान्यभाच्चभा ।
परखंडफलं प्रोक्तं स्वखण्डात् स्वस्वपूर्वया ॥ १११ ॥

इति श्रीब्रह्मसिद्धान्ते प्रथमोध्याय: ॥ १ ॥

आकर्षत: स्वसम्बन्धाद्भवतीति स्फुटा स्थिति: ।
मन्दोच्चाभ्यामर्कचन्द्रौ यदा मन्दफलं मुने ॥ १ ॥
आकृष्येते एव तस्मान्मन्दकर्मैकमेतयो: ।
चत्वार्यानयने द्वारौ परेषां(१) द्वे तु तत्र हि ॥ २ ॥

---

(१) 'द्वाराण्यन्येषाम्'—इति पाठ: साधु: ।

तत्कर्मणां चतुर्णां च क्रमः प्राक् सूचितो मुने ।
ग्रहभुक्तेः फले कार्ये ग्रहवत् तद्विलोमगे ॥ ३ ॥
फलव्यस्ते केन्द्रभुक्तिर्यदि वा त्रिज्यया हता ।
तत्कर्णाप्ता स्वोच्चभुक्तेर्विशोध्या सा गतिः स्फुटा ॥ ४ ॥
ग्रहोच्चभुक्तियोगात् तु हित्वा केन्द्रगतिं स्फुटाम् ।
शीघ्रोच्चभुक्तिशेषार्धं ग्रहकेन्द्रगतिर्यतः ॥ ५ ॥
शीघ्रोच्चभुक्तिरेकाहतदैक्ये योक्तवद्गतिः ।
शीघ्रार्धभुक्तौ तादृश्यां फलाद्याय ग्रहस्य तु ॥ ६ ॥
फलार्धार्धं तु मन्दार्धग्रहभुक्तियुताऽर्धिता ।
सा भवेद्विद्यमानत्वात् केन्द्रभुक्तिर्विशोस्तु सा ॥ ७ ॥
सोच्चभुक्तिर्भवेद्यत् सा प्रागुच्चेन्दुगतिस्ततः ।
ग्रहापच्चेपणं चार्धं करणं तत्प्रकीर्त्यते ॥ ८ ॥
ग्रहाणां भुक्तिरेवास्मिन् केन्द्रभुक्तिश्च मान्दयोः ।
स्फुटकेन्द्रगतेस्तस्याः स्फुटभुक्तिर्ग्रहस्य च ॥ ९ ॥
अथ वा केन्द्रभुक्तिः सा त्रिज्या कर्णान्तराहता ।
कर्णाप्ताऽशीघ्र्येऽर्धिता च ग्रहभुक्तेर्धनं त्वृणम् ॥ १० ॥
कर्णे त्रिज्याधिकोने तु व्यस्तं मान्दे विधीयते ।
उच्चैर्नीचैर्गते सूर्ये उच्चैर्नीचैर्ययुर्ग्रहाः ॥ ११ ॥
किञ्चित् तस्मात् फलं भानोस्तद्गत्या च तदा नतम् ।
ग्रहभुक्तिहतं भक्तं चक्रलिप्ताभिरर्कवत् ॥ १२ ॥
अर्कभुक्तिवदप्येवं ग्रहे कार्यं च तद्गतौ ।

मध्यग्रहेषु चोच्चेषु तद्भुक्तिषु च तत्कृते ॥ १३ ॥
तदादावखिलेष्वेवं कृतं यत् तद्धितं मतम् ।
स्वोच्चैः स्वनीचैस्ताभ्यां स्यादन्यस्यैतद्द्वयं भवेत् ॥ १४ ॥
अन्यस्यैवान्यदीयाभ्यां नातोऽर्कस्यैतदिष्यते ।
क्रियते या दुराशङ्का ग्रहस्फुटविधिं प्रति ॥ १५ ॥
साऽपरं क्षीयते पुत्र सांप्रतं तत्र तत् फलम् ।
मध्यसंज्ञा ग्रहाः पञ्चैवार्केन्दू नेति मध्यमौ ॥ १६ ॥
"यदि स्यात् तिथिसंवृद्धिह्रासाभावः प्रसज्यते ।
तिथयः सावनाहानि भगणा ह्रासवृद्धितः ॥ १७ ॥
यदि स्युरधिमासोनराव्यभावः प्रसज्यते ।
शुक्रज्ञयोः कर्षकोच्चं शीघ्रं तदितरस्य च ॥ १८ ॥
विक्षेपा न विकल्प्यन्ते फलहेतुर्न कल्पना ।
अर्केन्द्वोरपि शीघ्रार्धमन्दार्धादिप्रकल्पना ॥ १९ ॥
निष्फलत्वान्निरस्तैव महावायौ प्रधावति ।
तिरोधानेन षड्जादीन् वाद्यांश इव खेचरान् ॥२०॥
नुदति प्रवहस्येति मार्गभेदादिदं न सत् ।
कर्माणि यानि चत्वारि ग्रहस्यैवेति तानि च ॥ २१ ॥
शीघ्रार्धं स्याच्छीघ्रफलं चतुर्थं द्विगुणं तथा ।
मन्दार्धं स्यान्मन्दफलं तृतीयमपि नान्यथा ॥ २२ ॥
किञ्चोच्चाभ्यां निकृष्टाभ्यामपकृष्टः पुनस्तथा ।

कल्प्यं चेत् पुनरप्येवं तथाऽकेन्दू च नारद ॥ २३ ॥
ग्रहोपरि न शीघ्रोच्चमिति चेदुच्चताऽस्य न ।
त्रिज्योनशीघ्रकर्णश्च सर्वदा मुनिसत्तम ॥ २४ ॥
नाधः शीघ्रोच्च इति चेद्ग्रहस्तद्वल्लगस्तु सः ।
अधः कक्षा कल्प्यते चेत् कक्षाऽसौ तत्र कस्य वा ॥२५॥
तूष्णीं कक्षा कल्प्यते चेत् सर्वेषां तर्हि कल्प्यताम् ।
निष्फलत्वान्न सर्वेषामिति चेत् कल्प्यतां फलम् ॥ २६ ॥
निरर्थत्वात् कल्पनाया यथार्थं तु कारणम् ।
कल्प्यते चेत् कल्पितं तत्तथैव न तु किं पुनः ॥ २७ ॥
अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि ।
यथाश्रुति मया दृष्टं यत्तदेवानुबुध्यताम् ॥ २८ ॥
मध्यमाः स्थायिनः सन्ति नेति चेन्मध्यमानुगाः ।
ग्रहाश्चतुष्कर्मवन्त इति यत् तन्निराकृतम् ॥ २९ ॥
मध्यशीघ्रार्धमन्दार्धफलमेति तदाश्रयैः ।
उपग्रहैश्चापकृष्टा मन्दोच्चैश्च ग्रहा ययुः ॥ ३० ॥
इति चेन्मन्दभागे च नैवाकृष्टादुपग्रहाः ।
युज्यन्ते ते प्रकृष्टाश्चापकृष्टा ग्रहाश्च ते ॥ ३१ ॥
इति चत्वारि कर्माणि ग्रहस्यैव न तन्मतम् ।
उपग्रहापकर्षेऽपि पूर्वमेवेदमुच्यते ॥ ३२ ॥
अतो मन्दार्धशीघ्रार्धौ न सन्तीति हि नोच्यते ।
असत्त्वेऽन्यतरस्यापि ग्रहयोरर्धसंज्ञयोः ॥ ३३ ॥

एवमपकर्षणं कल्प्यं ग्रहस्यापि तथा पुनः ।
उपग्रहा न सन्तीति यदि ब्रूयाच्चतुष्टयम् ॥ ३४ ॥
कर्मणां स्याद्ग्रहस्यैव सन्ति तस्मादुपग्रहाः ।
अर्धाख्येनापकृष्टस्य नीचैर्नीचैर्यथा तथा ॥ ३५ ॥
उपग्रहोपकृष्टः स्यात् सग्रहस्तेन चेदिति ।
नैवमर्धग्रहस्थानज्ञानमेव तथोच्यते ॥ ३६ ॥
स्वच्छन्दगमनं तद्धि किं तद्वैरुच्चनीचता ।
अर्धाख्येनोपकृष्टस्ते ऽपकृष्ट उपग्रहः ॥ ३७ ॥
ग्रहस्याप्यपकृष्टः स्यात् तदभावान्न तद्भवेत् ।
विक्षेप्यौ च न चेद्भौमौ पाताभ्यां शुक्रचन्द्रजौ ॥ ३८ ॥
विक्षेप्यौ तौ तथा क्षेपलिप्ता चेन्न स्फुटा स्वदिक् ।
अपकृष्टैर्ग्रहैः साकं कर्षका यान्ति यत् ततः ॥ ३९ ॥
तेऽपकृष्टाः स्वमन्दाद्यैः पातास्तैश्च ततः फलम् ।
तृतीयमपि पातानां ग्रहवन्नेति कल्प्यते ॥ ४० ॥
तस्मान्मन्दार्धमन्दोच्चमध्ये यावदुपग्रहः ।
याति यद्दिशि तावत्येवास्ते तद्दिशि मध्यमात् ॥ ४१ ॥
स्वच्छन्दाकर्षकस्य क्षेपस्खलनमन्यथा ।
शीघ्रोच्चाविव शीघ्राख्यौ बुधशुक्रौ न चेतरौ ॥ ४२ ॥
इति चैतादृगुच्चाभ्यां ग्रहस्थानं च बुध्यताम् ।
याम्योत्तरगती तद्वदुत्क्रमाद्भास्करस्य च ॥ ४३ ॥

तथैवानपकृष्टानां गतेराधिक्यमल्पता ।
ग्रहकर्षकवद्वस्तु किं न चेदित्युपग्रहे ॥ ४४ ॥
स्वच्छन्दगमनं तेषां मन्दोच्चाः कथिता वृथा ।
मृषावादी च वेदः स्यात् तत् सर्वानर्थकारणम् ॥ ४५ ॥
मन्दाधीशो यद्दिशि च याति तन्मध्यमो ग्रहः ।
यावन्ति कल्पे मन्दार्घा यो गच्छेत् सोऽप्युपग्रहः ॥४६॥
स नास्ति यस्य गमनं कल्पजं गमनं न च ।
मन्दस्फुटाद्रोमशे हि सोमे च क्षेपसाधनम् ॥ ४७ ॥
कीर्त्तितं तत्कर्षकाः स्युर्न सम्बन्धान्तरं क्रमात्(१) ।
सूर्यरोमशसोमेभ्यो यथालब्धग्रहा इव ॥ ४८ ॥
कल्पिताः स्युः स्वनामादौ भिन्नाः संज्ञास्तथैव च ।
मन्दाकृष्टैर्हि मन्दाख्या ग्रहैरुक्ता ययुः सह ॥ ४९ ॥
विक्षिप्यन्ते च पातैस्तैस्ते ग्रहा इति कल्प्यताम् ।
इति चेत् कर्षकाणां तु प्रोक्तनामन्तरं भवेत् ॥ ५० ॥
व्यक्तं श्रुतिकृतं नाम नैतदप्यस्ति पौलिशे ।
ग्रहे कृतं यत् तत्पाते कृते नेति च वर्त्तते ॥ ५१ ॥
सोमरोमशयोः पाताः शोध्या मन्देभ्य ईरिताः ।
शुक्रज्ञपातयोर्वामक्रमणं सूर्यकीर्त्तितम् ॥ ५२ ॥
तृतीयेऽस्य न चेदिष्टं तत् तत्राप्यस्ति दूषणम् ।
श्रुत्यन्तरविरोधस्तु पौलिशेऽत्र च गम्यते ॥ ५३ ॥

(१) ध्रुवे इति ३—पु० पा० ।

तद्वाऽस्य गमनं तावन्निर्णीतं च सहेतुकम् ।
उपपत्तिनिमित्तं वा न तावत् प्रथमक्रमः ॥ ५४ ॥
यथेष्टकल्पनापत्तेर्द्वितीयः कल्प एव चेत् ।
पातमन्दोच्चमध्ये न फलं साध्यं न तन्मतम् ॥ ५५ ॥
कल्पस्तृतीयस्तद्दूरैरपकृष्ट उपग्रहः ॥
अश्वेनेन रथं पातमाकर्षति न वा सताम् ॥ ५६ ॥
स्तम्भच्छायादीपवच्चेन्न मन्दोच्चोऽत्र कारणम् ।
परस्परभचक्रार्धपातोपग्रहसञ्चरः ॥ ५७ ॥
वामं निष्कारणं पातीतीयं वा कल्पना सती ।
स्वोच्चादुपग्रहाद्वाऽपि नाकाशाद्धि तदिष्यते ॥ ५८ ॥
सहेतुकं कल्प्यमानं कल्प्यते न तु हैतुकैः ।
मन्दोच्चेनापकृष्टस्तु यावद्व्रजति भास्करः ॥ ५९ ॥
तेनाकृष्टा ग्रहास्तावत् ते तथोपग्रहैर्ययुः ।
भृत्यैस्तत् क्रियते कर्म स्वामिना क्रियते हि यत् ॥ ६० ॥
प्रत्यक् प्राग्वहिरन्तर्वा तद्ग्रहोऽर्कसमं व्रजेत् ।
इति चेन्नैतदिष्टं स्याद्भोगादावधिकं नृपाः ॥ ६१ ॥
सेवादावधिकं भृत्या वर्त्तन्ते न हि तत्समाः ।
यावान् यस्याधिकारः स्यात् तावत् तस्य प्रवर्त्तनम् ॥ ६२ ॥
सर्वचक्राधिपः सूर्यः कियद्याति स्वभुक्तितः ।
इयद्यातीति युक्तिः स्याद्राजाऽनुचरक्लृप्तितः ॥ ६३ ॥

श्रुतिर्यैव प्रमाणं स्याद्युक्तिः का तत्र नारद ॥
जिज्ञासोर्युक्तिरिष्टाऽस्ति यदि श्रुत्यनुसारिणी ॥ ६४ ॥
श्रुत्युक्तेष्टतरा युक्तिर्नान्यज्ज्ञायेत तच्छ्रुतिम् ।
कृत्वाऽऽदौ मान्दकर्मान्ते क्रियते शीघ्रकर्मवत् ॥ ६५ ॥
तस्मान्मन्दापकृष्टात् प्राक् शीघ्रेणाथापकृष्यते ।
किञ्चित्किञ्चिद्विलम्ब्यैव इति चेदपकर्षति ॥ ६६ ॥
नैतदेवं यदेवं चेत् गतिर्नानाविधाऽन्वहम् ।
विम्बं च शुक्लकर्मास्य [illegible]द्दृदे तदभावतः ॥ ६७ ॥
ननु विम्बाल्पताधिक्यं खमध्ये क्षितिजेऽन्वहम् ।
इति तु क्षितिजे ब्रह्माण्डांशको[illegible] [illegible]बाधो भ[illegible]ः ॥ ६
पूर्णिकृष्णांशवस्तस्माद्दृशः प्रतिहते महत् ।
विम्बं भूभाभिसंछन्नं रक्तवर्णं च दृश्यते ॥ ६९ ॥
असंमुखत्वान्मध्यात् स पार्श्वार्द्धं खखरत्वतः ।
स्तोकस्तोकेन भूरश्मिह्रासे चण्डांशुदर्शनात् ॥ ७० ॥
दृष्टिप्रतिहते विम्बं चीयमाणमिते गते ।
आरात् खमध्ये चण्डांशुरश्मिः प्रागलभ्यते भुवः ॥ ७१ ॥
रश्म्यभावाच्च पादोनं क्षितिजादिव दृश्यते ।
त्रिभिश्चतुर्भिः क्षितिजे खमध्येऽथ कलाहृतः ॥ ७२ ॥
अङ्गुलानि भवन्त्यस्मादित्युक्तं हि महर्षिभिः ।
भूमिकक्षाश्चतुर्भागे खस्थितस्यात्मनस्तु यः ॥ ७३ ॥
क्षितिजस्थखमध्यस्थ इत्येवासौ पुरोदितः ।

तिस्रश्चतस्रस्ता लिप्तास्तदानीमङ्गुलद्वये ॥ ७४ ॥
दृश्यते मण्डलेकेन बिम्बमन्येन वाऽन्यथा ।
एकस्मिन् दिवसे तस्माद्बिम्बाधिक्याल्पता न हि ॥७५॥
त्रिचतुःकर्णयोगार्धं स्फुटकर्णोऽस्य मस्तके ।
ग्रहस्वल्पतः किंचिद्विलम्ब्याकर्षणं न हि ॥ ७६ ॥
उच्चद्वयानुगुण्येन ग्रहो यद्यपि सञ्चरन् ।
तथाऽपि युगपत् कर्मद्वयं न क्रियते यतः ॥ ७७ ॥
तथाऽऽनीताः ग्रहास्तद्वत् दृश्यन्ते नैव वै ततः ।
उपदेशक्रमोऽप्येवं स च कर्मद्वयक्रमः ॥ ७८ ॥
यावता सोऽधिकः कर्णस्तावताऽर्धेन तादृशौ ।
त्रिज्यातः स्फुटकर्णोऽपि नार्थसिद्धविवर्जितः ॥ ७९ ॥
उपग्रहाणां यज्ज्ञातकक्षासिद्धिर्ग्रहस्य तु ।
सुतरां मन्दशीघ्राख्यकर्मणो कथिते क्रमात् ॥ ८० ॥
उच्चैर्नीचैर्व्रजन्तो वा कक्षानुरूपं समश्रवः ।
मध्यकर्णस्ततः कक्षान्तरत्वं याति यम्मुने ॥ ८१ ॥
अन्तरे वनतो वृक्षा वनप्रान्ते स्थिता इव ।
दूरत्वाच्चन्द्रकक्षायां दृश्यन्ते सकलास्तथा ॥ ८२ ॥
भौमार्किबुधजीवानां त्रिंश(१)त्षट्पञ्चवर्जिताः ।
विष्कम्भाश्चन्द्रकक्षायां षष्टिः शुक्रस्य कीर्तिता ॥ ८३ ॥

(१) दम्भोधिवर्जिता इति—पा० २ पु० ।

(१)त्रिज्याघ्नाः स्फुटकर्णाप्ता विष्कम्भास्ते स्फुटाः स्मृताः ।
तिथ्याप्ता बिम्बलिप्ताः स्युरङ्गुलानि पुरोक्तवत् ॥८४॥
कक्षाश्च भगणा मानं विधोरिच्छेतरस्य तु ।
विष्कम्भवः फलमस्येति विष्कम्भः पारमार्थिकः ॥ ८५ ॥
तथाऽर्कस्य स्वकक्षायां विष्कम्भः खखपञ्चषट् ६५०० ।
षष्टिरष्टाहता ४८० राज्ञस्तथा बिम्बस्य नारद ॥ ८६ ॥
निजमण्डलविष्कम्भः स्वकक्षायां फलं विधोः ।
कक्षेच्छामानमन्या वा मानेष्टभगणेच्छयोः ॥ ८७ ॥
इतीन्दुमध्यकक्षायां विज्ञेयं बिम्बयोर्मनम् ।
कक्षा वा भगणा मानमित्येवेच्छाधिकेन तु ॥ ८८ ॥
अर्केन्दुमण्डलव्यासौ स्फुटभुक्तिहतौ तयोः ।
मध्यभुक्त्युद्धृतौ स्पष्टौ प्राग्वल्लिप्तास्तदङ्गुलम् ॥ ८९ ॥
दूरस्थत्वात् तु बिम्बस्य सौक्ष्म्यं स्थौल्यं प्रकीर्त्तितम् ।
लोकदृष्ट्या यथाऽद्रेः स्वस्थाने नित्यं समात्मनः ॥ ९० ॥
अर्ककक्षेन्दुकक्षाप्ता सूर्यबिम्बश्रुतिर्यतः ।
इन्दुबिम्बश्रवाप्ता या क्षोणीना वा न वा ततः ॥ ९१ ॥
अर्केन्दुकक्षाव्यासार्द्धं तद्विष्कम्भाववेहि ते ।
तन्मध्यभुक्तिगुणिते स्फुटभुक्त्युद्धृते स्फुटे ॥ ९२ ॥

---

(१) व्यर्धाष्टवर्धितास्त्रिंशद्विष्कम्भांशास्तु दृष्टितः ।
भौमार्किबुधजीवानां चन्द्रमार्गे तु नारद ॥
इति २ पुस्तके अधिकः पाठः ।

भानोर्भार्धे महीछाया मह्त्त्वात् मण्डलस्य तु ।
अर्कस्य भूम्याः सूच्यग्रमानं शेषमिलार्कयोः ॥ ९३ ॥
असंकुचितशुद्धार्ककक्षाव्यासदलं फलम् ।
भूकर्णा इच्छाछायाघ्नस्ततो लिप्तास्तदङ्गुलम् ॥ ९४ ॥
अर्केन्दुकक्षाव्यासार्धे स्फुटे संकुचिते क्रमात् ।
मानेच्छाफलमर्केलाशेषं प्रोज्झ्य ततः फलम् ॥ ९५ ॥
भूकर्णादिन्दुकक्षायां छायाव्यासस्तदाततम् ।
युक्त्या कालाङ्गुलं वक्ष्ये युक्त्यन्तरमतिस्फुटम् ॥ ९६ ॥
भूछायेलागतस्याथ तरणिभ्रमणो विधोः ।
सूचीमध्यमकक्षायां कियतीति महीश्रवः ॥ ९७ ॥
स्फुटसूर्येन्दुभुक्तिघ्नो भक्तो मध्यमया फलम् ।
स्फुटार्कचन्द्रकर्णघ्नं फलमर्कमृगाङ्कयोः ॥ ९८ ॥
मानेच्छमध्यकर्णांस्तु प्रोज्झ्य सूच्याऽपि भश्रवः ।
तिथ्यः कलायां सन्त्येवमेतदर्धं विधोः श्रवः ॥ ९९ ॥
मध्यमिच्छाधिकाल्पार्कविम्बाभ्यां तादृशं त्वृणम् ।
मध्यार्कश्रवणे मानं तथा स्यादिति तन्मतम् ॥ १०० ॥
तस्यां स्फुटार्ककक्षायां व्यासार्धेनाधिकेन वा ।
अधिकाल्पमृणं माने नाधिकाल्पेऽर्कमण्डले ॥ १०१ ॥
परिध्यंशहृते विम्बव्यासो विम्बश्रवो भवेत् ।
उच्चेन तु समं येन योऽपकृष्येत् स तत्समः ॥ १०२ ॥
योऽत्यल्प उच्चो नीचाल्पः स्वबङ्गस्वल्प एव च ।

तेनापकृष्यते स्वर्णं मह्दल्पं बहु स्वतः ॥ १०३ ॥
उच्चैर्नीचैर्गते स्वोच्चपरिध्यंशाः स्वभावतः ।
अल्पाधिककला भुक्तिरुच्चैर्नीचैर्गतस्य हि (१) ॥ १०४ ॥
स्यादेतच्च फले कर्णे(२) शैघ्र्येऽल्पा गतिरन्यथा ।
अधिकाऽल्पा च या भुक्तिरुच्चैर्नीचैर्गतस्य हि ॥१०५॥
त्रिज्याधिकाल्पे यदि तु बहिश्चरति स ग्रहः ।
स्वतः शीघ्रानभिमुखं मान्दं तु क्वचिदस्ति हि ॥१०६॥
नैवं यदि स्यादेवैवं स्यात् पूर्वा परभार्धयोः ।
उच्चैर्ग्रहस्त्वृणधनं वा यद्येतत् फलं क्रमात् ॥ १०७ ॥
यदा स्याद्विकला भुक्तिस्तथा या तु भमण्डलम् ।
ग्रहं प्राग्गतिहीनं वा(३)प्राक्प्रत्यग्गतिवद्ग्रहात्॥१०८॥
सर्वेष्वपातान् वाऽतीत्य ब्रह्माण्डं वै तु नारद ।
प्रतिपादयितुं शक्या वक्रता न यतः परम् ॥ १०९ ॥
प्राग्गतिर्नास्ति यन्नास्ति केवलं तु न कारणम् ।
शनिमन्दात् परं चेत् को हेतुः खेटोऽप्यदर्शनात् ॥११०॥
वक्रता चाधिकगताविव कल्प्यो यदि ग्रहः ।
गतिरन्यानुरूपा सा भूयसीति न कीर्त्यते ॥ १११ ॥

---

(१) अल्पाधिका यथाशक्ति क्षेपाः पातैस्तथेदृशैः । इति २ पु० पा० ।

(२) स्यादेतच्चलकर्णेन—इति २ पु० पा० ।

(३) या चास्य विकला भुक्तिस्तया याति भमण्डलम् ।
ग्रहः प्राग्गतिहीने वा,......... ॥
अयं पाठः शुद्धः प्रतीयते ।

उच्चैर्नीचैर्गतस्यापि कार्या कर्णेन सूक्ष्मता ।
स्थौल्यं विम्बस्य चातो हि प्रसज्जेत मुनीश्वर ॥ ११२ ॥
ह्रासवृद्धिगतेनैव युक्तियुक्ते यदीरिते ।
उभयोरपि सिद्धे ते तन्मे निगदतः शृणु ॥ ११३ ॥
उच्चाख्यं प्रोज्झ्य केन्द्रं तद्गतगम्यान्तरं तयोः ।
यदि कल्प्येत दोःकोटी तदा बाहुः प्रसज्जते ॥ ११४ ॥
गताङ्कजज्या विषमे गम्यात् कोटिपदं भवेत् ।
युग्मभावाद्गतेष्याभ्यां कोटिबाहू युजीति च ॥ ११५ ॥
लिप्तास्तत्त्वयमैर्भक्ता लब्धं ज्यापिण्डका गताः ।
गतगम्यान्तराभ्यस्ता विभाज्यास्तत्त्वलोचनैः ॥ ११६ ॥
तदवाप्तफलं योज्यं ज्यापिण्डे गतसंज्ञके ।
इत्येवं नैव विवरं सदा ज्यापिण्डशङ्कितः ॥ ११७ ॥
गतज्याभावतस्त्विन्द्रोश्चतुर्थी ज्या सदा भवेत् ।
एवं संवर्त्तमानायां तच्चतुर्थी गता ह्यपि ॥ ११८ ॥
न तात्कालिकसिद्धिः स्याद्वर्त्तमाना यथा स्वतः ।
इष्टनाडी हता केन्द्रगतिः षष्ट्योद्धृताऽपि सा ॥ ११९ ॥
बाहुकोटी ज्यान्तरघ्ने तत्त्वनेत्रैस्तयोः फले ।
प्रत्यहं वर्द्धमानत्वाच्छीघ्रकेन्द्रस्य वर्द्धते ॥ १२० ॥
बाहुरोजपदे युग्मे क्षीयते कोटिरन्यथा ।
प्रत्यहं क्षीयमाणत्वान्मन्दकेन्द्रस्य वर्द्धते ॥ १२१ ॥
कोटिरोजपदे युग्मे क्षीयते बाहुरन्यथा ।

तद्वत् तद्ग्रहवच्चास्य फलं ग्रहफलोदितम् ॥ १२२ ॥
धनाख्यमन्यद्वीनाख्यं धनाख्यं ग्रहवद्गतौ ।
ऋणाख्यमन्यथा प्रोज्झ्य बहुभुक्तिं गते फलात् ॥ १२३ ॥
ज्यान्तरघ्नो गतिर्यद्वा दोःकोटिज्या ऽथ दृक् क्वचित्(१) ।
त्रिंशत्र्यंशादिभिर्मन्दे मिचन्द्राद्यैर्हृता हृता ॥ १२४ ॥
शैघ्र्ये त्रिभज्यया तुल्या दोर्ज्या चेत् चीयते ऽन्वहम् ।
वर्द्धते स्फुटवृत्तांशास्तथा व्यस्तास्तु नान्यथा ॥ १२५ ॥
तद्व्यस्तं जीवशान्योस्तु शैघ्र्ये युक्तिश्च सैव हि ।
स्फुटवृत्तान्तरहते दोःकोटिज्ये ग्रहस्य तु ॥ १२६ ॥
गतार्धं स्फुटवृत्तघ्नं बाहुकोटिज्ययोर्धनम् ।
वर्द्धमाने परिध्यंशे चीयमाणे ऋणं मुने ॥ १२७ ॥
गत्यर्धा बाहुकोटिज्या ग्रहवद्वर्द्धते यदि ।
धनात्मिका चीयते चेद्गुणरूपेति सैव च ॥ १२८ ॥
निश्चित्य फलजान्योन्यैः कृत्वा योगान्तरं मुने ।
भगणांशैर्बाहुकोट्योः फलजे तां विभज्य च ॥ १२९ ॥
ग्रहभुक्तेर्दोःफलज्यावर्गान्तरमितीरिता ।
कर्णदोःफलजावर्गैर्नाडिका यावता भवेत् ॥ १३० ॥

---

(१) दृक्करैः—इति २ पु० पा० ।
ग्रहभावफलज्ये दृग्विधा दिग्ज्या युतोनिता ।
गुणिता च गतेर्विप्र स्वर्णबाहुफलज्यया ॥
इति २ पुस्तकेऽधिकः पाठः ।

गते कोटिफलज्या तु द्विधा स्यात् तावता हृता ।
कर्णयोर्वृद्धहृद्धौ तु स्वल्पायां गतिवृद्धितः ।
ग्रहदोःफलजायां यावतोनाधिकं भवेत् ।
यावद्वर्गे गतिः कार्यस्तावत्येव न संशयः ॥ १३२ ॥
तां तु वर्गान्तरात् कर्णदोःकोटिज्यां विशोधयेत् ।
क्षीयमाणे वर्द्धमाने भूभायां तद्द्वये धनम् ॥ १३३ ॥
कुर्याद्यथोक्तनिष्पन्नकर्णभाज्यं यथा तथा ।
वर्द्धते क्षीयते चापि स्वगात् कोटिफलेन च ॥ १३४ ॥
कर्क्यादिकेन्द्रे तद्व्यस्तं चलकर्णस्तथा कृतः ।
कर्णकक्षागते कोटिफले मोक्षो मध्यामुने ॥ १३५ ॥
छेदोऽसौ द्विगुणस्तेन स्वच्छेदाप्तफलेन च ।
दोःफलानगुणश्चेन्दोः स्वकादूनाधिको भवेत् ॥ १३६ ॥
स्थिरीकर्मफलेनैव कर्णः कल्प्यः स्फुटः कृतः ।
गत्यर्थं चलकर्णं स्यात् त्रिज्यादोःफलजावधे ॥ १३७ ॥
ग्रहबाहुफलज्या तु कर्णान्तरहृता तथा ।
स्वमूलाधिककर्णेन ग्रहकर्णविवाविणा ॥ १३८ ॥
ऊनाधिकगुणा तादृक् फलं यच्चच्छिदाऽन्यथा ।
स्वकाभ्यां हृतकर्णाभ्यां ग्रहात् सिद्धात् ग्रहं मुने ॥ १३९ ॥
तत्पूर्वकालिके हित्वा भुक्तौ सत्यां गते फलम् ।
तादृक् स्यादिति संस्कारो हृतात् कर्णाद्द्विधाधिकः ॥ १४० ॥
निष्पन्नराशेः कर्णो न गते दोःफलमौर्विका ।

ज्यां प्रोज्झ्य तत्त्वयमलैर्हत्वा तद्विवरोद्धृतम् ॥ १४१ ॥
संख्यातत्त्वाश्विसंवर्गे संयोज्य धनुरुच्यते ।
इति क्रिया यदा तत्र तत्त्वाश्विभ्यः फलं लघु ॥ १४२ ॥
यज्ज्याखण्डफलं यावत् तावत् तत्त्वाश्विसङ्गुणम् ।
तज्ज्याखण्डोद्धृतं भुक्तेः फलं लिप्तादिकं भवेत्॥१४३॥
यथा ग्रहफलं यत्र तद्भुक्तौ च गते फलम् ।
तथाऽन्यथा त्वृणफलं वक्रभुक्तिस्त्वृणाधिके ॥ १४४ ॥
भुजज्याक्षीयमाणत्वादत्यल्पश्रवणस्य च ।
प्राग्लभ्यते च गत्यल्पं पूर्वाह्णादुत्तरे दिने ॥ १४५ ॥
भुजस्य वर्द्धमानत्वादत्यल्पश्रवणस्य च ।
पराद्धादौ महत्त्वं पूर्वाह्णादुत्तरे दिने ॥ १४६ ॥
अतो वक्रानुवक्रेति परपूर्वार्द्धयोः क्रमात् ।
प्रत्यग्गतेर्हानिवृद्धी वक्रोत्या त्वन्वहं गतौ ॥ १४७ ॥
मन्दमन्दार्द्धयोः कर्णः स्याच्छेदत्वादवक्रता ।
अर्द्धितत्वात् फलस्यैव शीघ्रार्द्धे मुनिसत्तम ॥ १४८ ॥
दूरस्थिताच्च शीघ्रोच्चाद्ग्रहः शिथिलरश्मिभिः ।
सव्येतराकृष्टतनुर्वक्रभुक्तिर्भवेदिति ॥ १४९ ॥
नाकृष्यन्ते हि शीघ्रार्द्धादाकृष्यन्ते ग्रहा इति ।
विशेषोऽस्तीति चेन्नित्यं तत्तद्भावप्रसक्तिवत् ॥ १५० ॥
अर्द्धितत्वात् फलस्यैवमित्युक्तं कारणं त्विह ।
इति चेद्वक्रभुक्तिश्च किं न स्यात् तादृशी सखे ॥ १५१ ॥

अतो न रश्मिशैथिल्ये वाङ्मात्राद्भ्रमयः किल ।
चुम्बकभ्रमकन्यायेनोच्चाभिमुखमेव च ॥ १५२ ॥
स्वयं याति ग्रहो भुक्तिस्तद्युत्त्यनुगुणा भवेत् ।
उपचारः सर्वमन्यन्मुख्यमिति हि स्थितिः ॥ १५३ ॥
शीघ्रवृत्तांशानुरूपं विप्रकर्षः प्रकल्प्यते ।
शीघ्रोच्चात् सप्तमे भौमः शुक्रो ज्ञेयस्तथाऽष्टमे ॥ १५४ ॥
शनैश्चरस्तु नवमे वविक्रणास्ते त्वक्रिणः ।
षट्के च पञ्चके तद्वच्चतुर्थे मुनिसत्तम ॥ १५५ ॥
अष्टौ विंशतिरङ्घ्रौनगजाग्निव्यर्धखेषवः ।
त्रितर्काः सत्रिभागाद्रिरसास्त्र्यङ्काश्च सषट्शतम् ॥ १५६ ॥
नवाशा नवसूर्याश्च वेदेन्द्राः शरबाणभूः ।
खात्यष्टिः खधृतिर्गोऽतिधृतिर्विश्वाश्विनस्तथा ॥ १५७ ॥
वेदाङ्कतिर्गौर्द्विदस्राः कुब्धिहस्ता युगार्थदृक् ।
खोत्कृतिरत्र्यंशहीनागरसहस्ताः खदन्तिदृक् ॥
खगोऽश्विनः खदन्ताः षड्दन्ताः शैलगुणाग्नयः ॥ १५८ ॥
मेषाद्यश्व्यादिमध्याख्याः षडंशोनाः खषड्गुणाः ।
त्रित्रिषट्पञ्चवह्नीन्दुद्वित्रयोऽर्थार्थदृक्शराः ॥ १५९ ॥
शरेन्दुभूद्विवह्नित्रित्रिगो वेदाब्धिवह्नयः(१) ।
शराः शतं द्विद्विरदास्तारासंख्याः स्वुरश्विभात् ॥ १६० ॥
पुनर्वसूत्तरर्क्षे तु दक्षिणर्क्षे च नारद ।

---

ऽब्धिषवेदात्रिवह्नयः इति—पा० २ पु० ।

प्राङ्मानमपि वाऽश्विन्योः सहायमुपकारणे ॥ १६१ ॥

| नक्षत्राणि | ध्रुवकाः | | तारासंख्या: | शरांशाः | | नक्षत्राणि | ध्रुवकाः | | तारासंख्या: | शरांशाः | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| चि | १८० | ० | १ | २ | द | रे | ३५९ | ५० | ३२ | ० | उ |
| ह | १७० | ० | ५ | ११ | द | उ | ३३७ | ० | २ | २६ | उ |
| उ | १५५ | ० | ५ | १३ | उ | पू | ३२६ | ० | २ | २४ | उ |
| पू | १४४ | ० | २ | १२ | उ | श | ३२० | ० | १०० | १ | द३० |
| म | १२९ | ० | ५ | ० | उ | ध | २९० | ० | ५ | ३६ | उ |
| आ | १०९ | ० | ५ | ७ | द | श्र | २८० | ० | ३ | ३० | उ |
| पु | १०६ | ० | ३ | ० | उ | अ | २६६ | ४० | ३ | ६० | द |
| पु | ९३ | ० | २ | ६ | उ | उ | २६० | ० | ४ | ५ | द३० |
| आ | ६७ | २० | १ | ९ | द | पू | २५४ | ० | ४ | ५ | द३० |
| मृ | ६३ | ० | ३ | १० | द | मू | २४१ | ० | ९ | ९ | द |
| रो | ४९ | ० | ५ | ५ | द | ज्ये | २२९ | ० | ३ | ४ | द |
| कृ | ३७ | ३० | ६ | ५ | उ | अ | २२४ | ० | ३ | ३ | द |
| भ | २० | ० | ३ | १२ | उ | वि | २१३ | ० | २ | १ | द३० |
| अ | ८ | ० | ३ | १० | उ | स्वा | १९९ | ० | १ | ३७ | उ |

अश्वयोनिक्षुरप्रख्यं शकटैणशिरोनिभम् ।
माणिक्यगृहबाणाभं चक्रप्राकारसन्निभम् ॥ १६२ ॥
द्वे पर्यङ्कनिभे हस्तो मुक्ताविद्रुमसन्निभम् ।
तोरणं बलिसङ्काशं कुण्डलं सिंहपुच्छवत् ॥ १६३ ॥
स्तम्बेरमरदाभं च तथा शय्यानिभं स्मृतम् ।

गजकर्णाकृतिः कर्णः शृङ्गाटकनिभोऽभिजित् ॥ १६४ ॥
मृदङ्गसदृशं तद्वत् वृत्ताकारं तथा पुनः ।
उभे शय्यानिभे तद्वन्मृदङ्गसदृशं पुनः ॥ १६५ ॥
अश्विन्या मुरजाभं तद्वन्मूलेऽह्यन्यदार्धिकम् ।
आषाढद्वितयं चैव योगताराऽथ वक्ष्यते ॥ १६६ ॥
उत्तरात्रिभसौम्यानां मध्यमात् त्रिभमेव हि ।
ब्रह्मादित्यभदैत्यानां प्राची हस्तस्य वायवी ॥ १६७ ॥
पश्चिमा तु द्वितीया च श्रविष्ठायाश्च पश्चिमा ।
पितृपौष्णयमाग्नीनां श्रवणाभिजितोस्तथा ॥ १६८ ॥
मूलार्द्राभार्धसप्तांशे स्वस्थानात् प्रागवस्थिता ।
दृश्यते यस्य तस्यास्ति न स्वप्नेऽपि शिवस्मृतिः ॥ १६९ ॥
यत्र यावत्सु विक्षिप्तास्तारा अंशेषु वेधसा ।
मयैव तत्र यावन्तो विक्षेपांशा उपग्रहाः ॥ १७० ॥
द्विदैवाष्टत्रयं स्वष्टुस्त्वष्ट्राकौ हि प्रचेतसः ।
स्वक्रान्तेर्दक्षिणस्थानात् तदन्येभ्यस्तथोत्तरे ॥ १७१ ॥
आशाऽर्कपञ्चबाणाशा नवषट्खाद्रिखांशुमान् ।
विश्वेश हस्तसप्ताग्निरध्यर्धत्रिकृतात्मकाः ॥ १७२ ॥
व्यर्धतर्काः शराः षष्टिस्त्रिंशत् षट्त्रिंशदेव हि ।
अध्यर्धकृत्युत्कृतिः खं विक्षेपांशाः स्युरश्विभात् ॥ १७३ ॥
क्षेपार्धांशो वारुणस्य छायायाभिन्नमङ्कतः ।
त्रिक्षेपा दक्षिणेऽशीत्यामगस्त्यो मिथुनं गतः ॥ १७४ ॥

मिथुनांशे मृगव्याधो विंशे याम्ये नभोऽर्णवैः ।
हुतभुग् ब्रह्महृदयौ वृषे द्वाविंशभागगौ ॥ १७५ ॥
अष्टाभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ ।
पूर्वस्यां ब्रह्महृदयात् पञ्चांशैस्तु प्रजापतिः ॥ १७६ ॥
सौम्येऽष्टत्रिंशदंशैस्तु निर्दिश्यः सर्वदा मुने ।
उत्तरांशैरपांवत्सश्चित्रायां पञ्चभिस्तथा ॥ १७७ ॥
आपस्ततोऽधिकः स्वल्पे षड्भिरंशैस्तदुत्तरे ।
यदैवादौ तदाऽन्यस्मिन् ज्ञाते तारागणेऽपि च ॥ १७८ ॥
फलाभावान् न तं सर्वमुत्सहे कथितुं मुने ।
युगादौ विष्णुताराया: क्रतुभाद्यैः समाश्रितः ॥ १७९ ॥
प्राच्यां त्रिहस्तैः पुलहः पुलस्त्योऽतो दशांशकैः ।
अत्रिस्ततस्त्रिभिर्भागैरङ्गिरा ह्यष्टभिस्ततः ॥ १८० ॥
वसिष्ठः सप्तभिस्तस्मान्मरीचिर्दशभिस्ततः ।
प्रत्यक् प्राग्गतिस्तेषामष्टौ लिप्ता मुनीश्वर ॥ १८१ ॥
बाणार्था भूशराः खार्थाः षड्बाणाः सप्तसायकाः ।
षष्टिर्नभोरसास्तेषां विक्षेपांशाः स्युरुत्तरे ॥ १८२ ॥
क्वचित् क्वचिदकस्मात् ते भगवन्नुत्तरे चराः ।
खखाद्रिनेत्रवर्षाणि २७०० तिष्ठन्ति मुनिवल्लभाः ॥१८३॥
कालान्तरेण तज्ज्ञानं स्वयं युक्तिमतो भवेत् ।
कर्क्यादिस्था मृगान्तस्थाः सृष्टेरुद्गवाङ्मुखाः ॥१८४॥
प्रत्यक् यान्ति याम्योद्गमने विहितेऽपि यत् ।

तत्पश्चाच्चलितं चक्रमुपचारोऽयमित्यपि ॥ १८५ ॥
तत्तत्पश्चाल्लवक्रान्तिप्रसङ्गाद्द्रिदृग्लवाः ।
ततोऽन्यथाऽथ प्रत्यब्दं किञ्चित् किञ्चिद् व्रजन्ति हि ॥ १८६
तत्तत्पश्चाल्लवक्रान्तिप्रसङ्गेऽपि निजास्पदात् ।
पश्चिमांशक्रमप्राप्ते प्राक् चक्रं चलितं स्थितम् ॥ १८७ ॥
यावत्सृष्ट्यादिनिर्दिष्टस्थानं तावत् प्रभान्ति ते ।
भाद्येषु चरतां तेषामन्तरांशास्तदास्पदात् ॥ १८८ ॥
तत्तत्प्रागंशकक्रान्तिप्राप्तिः स्यात् प्राग्लवस्य च ।
प्राक् चक्रं चलितं चेति नारदैवोपचर्यते ॥ १८९ ॥
प्रागंशक्रमसम्प्राप्ते प्राक् चक्रं चलितं भवेत् ।
प्राक्पश्चाच्चलनांशोनाः स्वर्णं स्याद्भास्करादिषु ॥ १९० ॥
क्रान्तिकीलांशलग्नानां लम्बनं द्युगतं द्वयोः ।
स्फुटार्थमयनार्थं च प्रत्यहं ह्युदयास्तयोः ॥ १९१ ॥
यद्दिने यस्य कक्षा च तत्र तेषां प्रवृत्तितः ।
इत्येतदेकं चलनं प्राक् युगे तानि च षट् शतम् ॥ १९२ ॥
युक्त्याऽयनग्रहस्तस्मिंस्तुलादौ प्राक्चलं भवेत् ।
यद्वा तच्छुद्धचक्रे वा मेषादौ प्राक् चलं भवेत् ॥ १९३ ॥
अयनांशास्तद्भुजांशास्त्रिघ्नाः सन्तो दशोद्धृताः ।
प्राक्प्रत्यक्चलनं चक्रस्यैवेति मनुते तु यः ॥ १९४ ॥
चलांशसंस्कृतस्तस्य ग्रह एव स्फुटग्रहः ।
अनभ्युपगमादेतस्योपचारश्च चेदिति ॥ १९५ ॥

दोर्ज्या त्रिज्या क्रान्तिजीवा चेत् सम्प्राङ्कगुणोन्दवः ।
चापक्रान्तिरुदग्याम्या चक्रपूर्वापरार्धयोः ॥ १९६ ॥
सा तुल्यभिन्नदिक्क्षेपयुतोना स्यात् स्फुटा च दिक् ।
एवोभयोरधिकदिङ्मात्रोऽयमितरस्य च ॥ १९७ ॥
रक्षोगणत्वात् पातानामपसव्यं ययुर्ग्रहाः ।
प्राक्पश्चार्धगतः पातो ग्रहाद्भ्रामयति ग्रहम् ॥ १९८ ॥
याम्योत्तराशाभिमुखं केन्द्रदोर्ज्या च पूर्ववत् ।
क्रान्तेः पूर्वे वा परार्धे याम्यक्षेपो यदेष्यति ॥ १९९ ॥
पातं संशोध्यापक्रष्यात् केन्द्रदोर्ज्यां च विद्धि भोः ।
दोर्ज्या त्रिभज्या चैकाशीत्यंशकाः परमं ययुः ॥ २०० ॥
विक्षिप्यते राहुणा तु दोर्ज्या क्रान्तिलवाश्रया ।
तन्नवांशं द्विगुणितं जीवस्त्रिगुणमुर्विजः ॥ २०१ ॥
बुधशुक्रार्कजाः पातैः विक्षिप्यन्ते चतुर्गुणम् ।
दशघ्नत्रिघनाङ्कार्करसाक्षोर्काहतस्य च ॥ २०२ ॥
बिम्बस्य पातबिम्बत्वात् क्षेपस्तद्वनुरुच्यते ।
त्रिगुणास्त्वंशकैर्भक्तास्त्रिज्यार्धं बिम्बयोजनम् ॥ २०३ ॥
दस्रादीनां स्फुटं नास्ति स्फुटं ताराग्रहस्य तु ।
इन्दोरपि समीपत्वान्नैवं स्याद्बिम्बयोजनम् ॥ २०४ ॥
रूपसाम्यात् समीपत्वादन्येषां भगणस्य च ।
समानन्यायतापत्तिः कक्षाभेदान्न सा सती ॥ २०५ ॥
अपक्रमात् स्वक्षेपान्ते दृश्यन्ते खचरा यतः ।

क्रान्तिमित्य पुरः क्षेपं पश्चाद्देतीति चेत् ततः ॥ २०६ ॥
उभयानुगुणं शुक्रक्रान्त्यन्ते खेचरो व्रजेत् ।
नान्यथापत्तिरित्येवं प्रोक्ता शङ्का निरास्यदा ॥ २०७॥
दोःकोट्योरिष्टजीवोना त्रिज्याऽन्या क्रममौर्विका ।
चक्रक्रान्तिमहीकक्षामानेच्छाफलमित्युत ॥ २०८ ॥
विन्द्यादृग्यद्दधनस्थानं क्रान्तिदिक्कं विनिर्दिशेत् ।
तस्मिंश्चक्रविशालार्थं क्रान्तिकोट्युत्थमौर्विका ॥ २०९॥
स्वाहोरात्रार्धकर्णः स्याद्दिनव्यासदलं मुने ।
स्वाहोरात्रार्धमित्याद्यैरुच्यते नामभिस्त्रिभिः ॥ २१० ॥
क्रान्त्यैति यावत् तावत् तु व्यक्षादोजपदोत्यया ।
तन्मेरुमध्यात् तावती स्याद्वक्रार्धस्य तावती ॥२११॥
यावती युगपत्क्रान्तिस्तावती रात्रिरुच्यते ।
अन्यद्दिवाऽत्र तन्मेरुः परो मेरुरितीरितः ॥ २१२ ॥
मेरुभ्यां मेरुकक्षायां भागे पञ्चदशे मुने ।
विलोमेनायनान्ते तु सुरासुरविभागयोः ॥ २१३ ॥
नाडीषष्ट्या सकृदह्नोर्नाडीषष्ट्या सकृन्निशा ।
तदन्तरे स्त्यलोकः क्वचिद्दृष्टहिर्दिवानिशाः ॥ २१४ ॥
तथैव घटिकाषष्ट्या ते यत्सर्वं यथोदितम् ।
द्वारुभिर्विषुवत्कक्षाक्रान्तिकक्षा उभे अपि ॥ २१५ ॥
आधारकक्षा क्षितिजं मण्डलं चक्रकैः समाः ।
द्वाभ्यांशकक्षाः षट्त्रिंश उदक् निरस्तवपागतीः ॥२१६॥

कृत्वा तद्वहिर्नव्यासदलैर्बद्ध्वा यथोचितम् ।
आधारकक्षयोर्योगो ध्रुवयोः स्थानमत्र तु ॥ २१७ ॥
रथचक्राकृति मेरुदण्डद्वीपाद्रिसागरैः ।
नदीभिः पत्तनपुरैर्भूगोलेन युतेन च ॥ २१८ ॥
क्रान्तिकक्षाश्चतुःषष्टिस्ततो वृत्तेन सर्वतः ।
मध्योन्नतं प्रसार्याग्रे उभयत्र विनिर्गते ॥ २१९ ॥
यथा ध्रुवौ ध्रुवसमौ स्तम्भयोः स्थापयेद्ध्रुवम् ।
कक्षाभिर्मध्यकक्षाद्यैर्ध्रुवद्वयगतैरपि ॥ २२० ॥
विभज्य गोलं द्वादशधा मेषादीन् निर्दिशेत् समान् ।
तुलामेषादितः कर्किमृगादि च लवद्वयोः ॥ २२१ ॥
तन्मुखाधारकक्षायां योगकक्षां प्रवेशयेत् ।
क्रान्तिसञ्ज्ञा तिर्यगेवं तुलामेषादितः सुत ॥ २२२ ॥
स्वाधारं ध्रुवयोः कक्षा मध्यस्था क्षितिजाभिधा ॥
अक्षांशमानोपरिष्टाद्योजयेत् तन्त्रमुत्तमम् ॥ २२३ ॥
आच्छाद्य शुक्लवस्त्रेण निर्दिश्यांशांश्च नाडिकाः ।
मेषोन्नतस्थानतस्तु तच्छुद्धक्रान्तिमस्तके ॥ २२४ ॥
नतं वियच्चरं स्थाप्यं कालयन्त्रैश्च कालवित् ।
सूर्योद्दिनगतैः सूत्रैरुन्नयेदुदयस्तुलात् ॥ २२५ ॥
क्षितिजादुदयं लग्नं तद्वशाच्च खमध्यगम् ।
अस्तं गच्छंश्च विज्ञेयः सर्वं प्रत्यक्षतामियात् ॥ २२६ ॥
मञ्चाऽचला मही मेरुध्रुवौ क्षितिजमण्डलम् ।

अवटस्थमधोभागं क्षितिजादत्र कारयेत् ॥ २२७ ॥
उपर्यधोगता नाड्यः क्षितिजाः स्युरहर्निशोः ।
साक्षे चक्रस्य तिर्यक्त्वादुदयस्थो ह्युत्तरम् ॥ २२८ ॥
क्षपा सञ्चरतोऽल्पा स्यादनल्पं दिनमात्मज ।
अन्यदेतस्य संयातुर्लङ्काक्षितिजमण्डलात् ॥ २२९ ॥
अत ऊर्ध्वं प्राग्दृष्ट्या क्षितिजात् तादृशात् स्वकात् ।
एवं सत्युत्तरक्रान्तौ त्रिंशतोऽल्पाधिकं दिनम् ॥ २३० ॥
पूर्वापरामरांशे तु याम्यक्रान्तौ विपर्ययात् ।
अक्षच्छया द्वादश चेन्मेषादिक्षितिजान्तरम् ॥ २३१ ॥
क्रान्तिज्यालघुकक्षायां तत्क्षितिज्येति चोच्यते ।
तच्चापार्धं दिनव्यासदलं त्रिज्येति कल्प्यताम् ॥ २३२ ॥
सा विशिष्टा चरज्या च चरप्राणा हि तद्धनुः ।
नाड्यः पञ्चदशैतेन द्युचपार्धादिसंस्कृताः ॥ २३३ ॥
दिनक्षिपे तद्द्विगुणे षष्टिरेव तयोर्युतिः ।
कक्षायामधिकाल्पायां महत्यल्पाश्च नाडिकाः ॥ २३४ ॥
महान्तोऽल्पास्तथांशा यद्वैषुवत्यां ततोऽधिकाः ।
भान्तकक्षासु षट्स्वल्पास्तोकास्तोकेन नारद ॥ २३५ ॥
तदैवेदं भवेदोजपदे क्षिप्त्वाऽऽदितोऽन्यथा ।
अनोजपदभेष्वेव दुःसाध्यत्वाच्च कस्य चित् ॥ २३६ ॥
युक्तिसिद्धैव कक्षाणां कल्प्यं व्यासदलं समम् ।
इष्टद्युभुक्तिकर्णार्धमेकद्वित्रिभमौर्विकाः ॥ २३७ ॥

फलं चापानुरूपं तत् तत्कक्षासु प्रकल्प्यताम् ।
अहोरात्रार्धकर्णः स्यात् तस्य तस्य मितिर्भवेत् ॥२३८॥
इच्छायामन्यकक्षायां त्रिज्या त्रिज्याधिका न तत् ।
इच्छाकक्षाचापखण्डा मेषाल्लङ्कोदयासवः ॥ २३९ ॥
खागाष्टयोऽर्थगोऽश्वैकाः शरत्र्यङ्कहिमांशवः ।
कर्कटान्ते विलोमेन तुलायाः षडिमे मह्त् ॥ २४० ॥
अनल्पा राशयोऽन्योन्यं तल्लग्नादीदृशा अपि ।
मध्यप्रान्तमहावायुखण्डवायुवशाद्गतिः ॥ २४१ ॥
शीघ्रमन्दाश्रयान् खेटान् दर्शयेत् समसञ्चरान् ।
मध्यामध्यमहास्वल्पमार्गाभ्यां भ्रामकं समम् ॥ २४२ ॥
सर्वेषां चित्रमस्तीति मा शङ्काऽस्तु तदेव च ।
खेचारिणः खगाः खेटाः खेचराश्च वियच्चराः ॥ २४३ ॥
इतीह व्यवहारोऽयमृषीणां महतां मुने ।
पूर्णं मेषादिभिर्गोलं चक्रं स्यान्न तु चेन्न तत् ॥२४४॥
ग्रहमैत्रादिवद्भावा मेषाद्या हि प्रकीर्त्तिताः ।
वस्तुवृत्तेन मेषाद्या ग्रहमैत्रादिवन्न हि ॥ २४५ ॥
व्यक्षादुत्तरतस्तत्तदुत्तरोत्तरतो नतम् ।
पार्श्वयोः क्षितिजं व्यक्षं क्षितिजादुत्तरे दले ॥ २४६ ॥
तथा दक्षिणचक्रार्धे दृश्यते ह्यन्यथा मुने ।
तावत्प्रतीत्यै क्षितिजं तत् तावदुभयास्पदम् ॥ २४७॥
कलया निरक्षाः क्षितिजमक्षादनस्ततः ।

उत्तरोत्तरतोऽधोऽधो मृगषट्कमुदेति हि ॥ २४८ ॥
निःशेषं स्वोदयस्थानं यस्मात् सृष्टेन गच्छति ।
अतो मृगाद्याः षट् स्वखचरखण्डविवर्जिताः ॥ २४९ ॥

स्वोदयाः कर्कटाद्यास्तु
दृश्यन्ते षट् ततोऽन्यथा ।
तत्कालक्रान्तिकच्चातो
राशीनां चितिजात् स्वकात् ॥ २५० ॥

उदयास्तमयावेव स्वकार्येणान्यथा यतः ।
लग्नानयनवेलायां संस्कारोऽलायनस्य च ॥ २५१ ॥
इष्टतः क्रान्तिकच्चातो यदन्यत् तदपीह तत् ।
मर्त्यलोकोत्तरावाच्योरच्चभा सप्तविंशतिः ॥ २५२ ॥
तयोर्मृगाद्याः कर्काद्या युगपत् षष्टिदर्शनात् ।
अतो देवासुरांशे तु व्यस्तलग्नाद्दिनं चपा ॥ २५३ ॥
अमृत्युलोके गणयेन्नैतदेवं महामुने ।
यद्राशिस्थो यत्र दृष्टस्ते मासास्तत्र दृश्यकाः ॥ २५४ ॥
तद्राशिस्तदहः प्राणास्तस्य भुक्तेः कलीकृतेः ।
अधिकत्वं त्वहोरात्रं ताराहोरात्रतो भवेत् ॥ २५५ ॥
नाचनाडयस्ता नाडयस्तासु स्वर्णं चरं यदि ।
कुर्वीत चरनाडीस्थ प्रोक्तं तन्मानजं फलम् ॥ २५६ ॥
कृच्छ्रा तत्तदहोरात्रं नाक्षत्रं मानमित्यथ ।
षष्टिस्थ तत्र नाक्षत्रं संस्कुर्यात् तादृशे मुने ॥ २५७ ॥

स्वाहोरात्रचतुर्भागे नाक्षत्रं द्युत्रपादलम् ।
सौरे नाड्यो भुक्तिसिद्धास्तत्तन्नाड्योऽन्यथोद्भवाः॥२५८॥
ग्रहोदयानन्तरं षष्टिस्तन्नाक्षत्रदिनान्तरम् ।
भवन्ति फलमानेच्छास्ताश्चाक्ष्यो नाडिकाः स्मृताः॥२५९॥
नाक्षत्रनाड्यः कथने सौरास्तात्कालिकागमे ।
छायालग्नागमे तत्तन्नाड्यो ग्राह्या इति स्थितिः॥२६०॥
अनुक्तं रोमशेन्द्रकैराद्यैस्तत्तत् स्मृतं स्वतः ।
इत्येवं कथितं पुत्रान्यद्दै शृणु समाहितः ॥ २६१ ॥

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते

द्वितीयोऽध्यायः ॥ २ ॥

तिथयस्त्रिंशदृक्षाणि सप्तविंशतिरेव हि ।
तावन्तो भगणे योगाः करणानि नभोरसाः ॥ १ ॥
अर्कोनचन्द्रलिप्ताभ्यस्तिथयः करणानि च ।
ग्रहस्य भानि सार्केन्द्वोर्योगाः स्युर्योगभाजिताः ॥ २ ॥
प्रवेशनिर्गमौ भोगस्तेषां तावन्मुहुस्तदा ।
तौ कार्यौ वर्त्तमानानां तत्तन्मध्यस्फुटग्रहैः ॥ ३ ॥
मासादिकरणं हित्वा किंस्तुघ्नं स्थिरसंज्ञितम् ।
तिथ्यर्धराशेः सप्तैव ववादि चरसंज्ञितम् ॥ ४ ॥
मासेऽष्टकृत्व एकैकं वर्त्तते करणं परम् ।
स्थिराणि त्रीणि मासान्ते शकुनं च चतुष्पदम् ॥ ५ ॥
नागस्तदनु कृष्णायाश्चतुर्दश्याः परार्धतः ।

पूर्वापरार्धजा विष्टिर्विष्टिरेव दिवानिशोः ॥ ६ ॥
सा त्याज्या त्वन्यथा भद्रा सर्वकर्मसु भद्रदा ।
पुच्छाख्या दशमे विध्या अपि चैतच्छुभावहा ॥ ७ ॥
सा कृष्णाऽत्युन्नता स्थूला हनुगण्डस्थला मुने ।
उग्रगण्डा दीर्घनासा वह्निनेत्रा महोदरा ॥ ८ ॥
क्रोडी च भीकराकारा सर्वारिष्टकरी सदा ।
लाङ्गूलिनी वह्निलक्षमुद्गिरन्ती त्रिपाज्जगत् ॥ ९ ॥
सर्वं व्याप्नोति पातोऽपि तद्रूपस्तत्क्रियः पुमान् ।
द्विपादपुच्छ एवासौ संज्ञाभेदेन वैधृतः ॥ १० ॥
सप्तादशे सप्तविंशे योगे च सह वर्त्तते ।
क्वचिच्च तस्मात् प्रबलः क्वचित् तस्मात् सुदारुणः ॥ ११ ॥
चलांशसंस्कृतार्केन्द्वोस्तदसंस्कृतयोस्तु वा ।
भिन्नैकायनगतयोर्युतौ भार्धेन मण्डले ॥ १२ ॥
क्रान्त्योस्तौल्ये क्रमात् पातो वैधृतस्स सुदारुणः ।
विषुवत्क्रान्तिसाम्याद् द्विर्यदा स्युर्द्विविधास्तदा ॥ १३ ॥
द्वितीयप्रबलः पातो द्विर्भवेदिति निश्चयः ।
क्रान्त्याऽभिचरतोरेव भास्करेन्द्वोः परस्परम् ॥ १४ ॥
तावदेवास्य पातोऽयं व्यतिपातोऽयमित्युत ।
अयं प्रसिद्धोऽतस्तावद्देवास्यापि च संभवः ॥ १५ ॥
परस्परं वा चरतोरर्केन्द्वोः प्रबलोद्भवः ।
स्यात् तदर्धोक्तविषुवे चलसंस्कृतसंभवे ॥ १६ ॥

अर्केन्द्वोः पथिके क्रान्तिस्तद्दिशा तद्दिधे गती ।
अपि ग्रहस्यैव कल्प्ये प्राग्गतिश्चेति बक्रता ॥ १७ ॥
मन्दाधिकोनशीघ्रे स्यात् तद्योगो गतगम्यजः ।
अवक्रिणोर्द्वयोरेवं वक्रिणोस्तु विपर्ययात् ॥ १८ ॥
प्राग् गत्याऽत्यधिकेऽतीतो भावहीने तु वक्रिणः ।
गत्यन्तरेण तद्वक्रादनुलोमविलोमयोः ॥ १९ ॥
दिनादि वक्रिण्येतस्मिन् भुक्तियोगेन नारद ।
तात्कालिकौ ग्रहौ तेन छेद्यमिच्छामितिर्हरः ॥ २० ॥
स्वभुक्तौ फलमिष्टं वा तौ भवेतां मुहुर्मुहुः ।
क्रान्तेर्दिनादि गणयन् क्रान्तिसाम्यं विचारयेत् ॥ २१ ॥
क्रान्तिर्यदाऽपनीतेन्दोः स्फुटक्रान्तिर्गतैष्यजा ।
कल्पौजयुग्मपदजा युग्मौजपदजेति हि ॥ २२ ॥
सूर्यक्रान्त्यधिकोनेन्दोः शीघ्यक्षेपात् तदा तु सा ।
पात ओजपदेऽत्या चेद्वामं त्वन्यपदेऽङ्गना ॥ २३ ॥
परमक्रान्तिजीवाघ्नी क्रान्तिज्या त्रिज्यया फलम् ।
तच्चापान्तरमर्धं वा शताल्पं शीतगोः फलम् ॥ २४ ॥
तत्संस्कृतेभ्यः क्रान्ती ते समे यावत् पुनः पुनः ।
उपक्रमोपसंहारग्रहान्तरकलादिकम् ॥ २५ ॥
तद्युक्त्या परमे हीने भावी पाते गतेऽधिके ।
पातस्य मध्यकालस्य क्रान्तिसाम्यमथापि वा ॥ २६ ॥
चतुःशती शताल्पो वा ततोऽनल्पार्धमल सा ।

क्रान्तिगत्यन्तरं षष्टिर्मानैक्यार्धमितिः फलम् ॥ २७ ॥
दृक्छास्थित्यर्धनाड्यः स्मृताः काले च मध्यमे ।
निर्गमस्य प्रवेशस्य पातस्याथ विबुध्यताम् ॥ २८ ॥
मत्योरैक्यं चान्तरं वा गत्यन्तरमितीरितम् ।
न चेत् क्रान्त्यन्तरं वाद्यौ त्वन्तरैक्यं न मानयोः ॥२९॥
स्यादेतत् प्रथमप्रश्ने तूष्णीं गत्यन्तरं यतः ।
कथितं तत्क्रान्तिभुक्तौ गत्यैक्यं च न संस्थितिः ॥ ३० ॥
एवं चेद्ग्रहयोर्मध्यं मानैक्यार्धं भवेल्लये ।
स्यात् तदा समलिप्तौ तौ मध्यकालौ यदाऽपि च ॥३१॥
क्रान्तिर्न कारणं यस्मात् तस्मादेतन्न संमतम् ।
उपायः क्रान्तिसाम्यार्थं कश्चिदत्र निरूप्यते(१) ॥ ३२ ॥
तत्र स्नानेन दानेन दत्तश्राद्धजपादिभिः ।
यत् प्राप्यं सुमहच्छ्रेयस्तत्कालज्ञानतोऽपि च ॥ ३३ ॥
अविशेषेण सर्वाणि नक्षत्राणि व्रतानि तु ।
रात्र्यर्धव्यापिनक्षत्रे कुर्याद्वा तदुपस्थिते ॥ ३४ ॥
सर्वत्र याः संनिहिता नाड्यस्तास्ताः सुपुण्यदाः ।
त्रिधा विभज्य रात्रिं तां मध्यांशे यन्न तारकम् ॥ ३५ ॥
उपोषितव्यं यद्यत्र येनास्तं याति भास्करः ।

---

(१) २ पुस्तकेऽधिकः पाठः ।
दिग्भेदेऽपीति दिक्तौल्यमेतावत् कल्प्यमेव च ।
ज्वलज्ज्वलनाकारे काले यावत् पतत्यसौ ॥

श्रोणा श्रविष्ठया युक्ता ग्राह्या तु द्वादशीव्रते ॥ ३६ ॥
ज्येष्ठा श्लेषा रेवती च पादा अन्त्या भसन्धयः ।
तेषां च तत्पराणामन्त्या आद्याश्च षोडश ॥ ३७ ॥
भसन्धयश्च गण्डान्ताः सर्वकर्मसु वर्जिताः ।
यथैव लग्नगण्डान्ते नास्ति जीवे विनिर्गतिः ॥ ३८ ॥
तथैव तिथिगण्डान्ते नास्ति दौर्बल्यशालिनी ।
प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रतेषु च ॥ ३९ ॥
अभावे द्विगुणच्छायाव्यापिन्यां काल ईदृशे ।
दिवा नक्तं चरेद्वर्ग्यव्यापिन्यां वा तथा ततः ॥ ४० ॥
उपवासदिने रात्रौ स्यान्नक्तं हरिवासरे ।
एकभुक्तेन नक्तेन तथैवायाचितेन च ॥ ४१ ॥
उपवासेन दानेन पञ्चधा देशिको भवेत् ।
व्रतं चैव द्विजे चोक्ता न (१)याचेत व्रतं ततः ॥ ४२ ॥
मध्याह्नव्यापिनी तद्वदेकभुक्तव्रतं प्रति ।
उपवासदिनेऽप्येवं पूर्वाह्णव्यापिनी मुने ॥ ४३ ॥
द्युरात्रव्यापिनी ज्येष्ठा व्रते सा तदुपस्थिता ।
ज्येष्ठोपवासे पूर्वविद्धा सा ग्राह्या चास्तगामिनी ॥ ४४ ॥
तदैक्ये परविद्धा सा क्षीयमाणेन तन्मतम् ।
ओजयुग्मे तिथिः पूर्वा परविद्धा च पक्षयोः ॥ ४५ ॥
व्रतोपवासादौ ग्राह्या वृद्धिहानी च कारणम् ।

(१) न याचेत कुतश्चन इति २ पु० पा० ।

पूज्या स्वल्पाऽपि सर्वत्र या तिथिर्वृद्धिगामिनी ॥ ४६ ॥
महत्यपि न सा पूज्या या तिथिः क्षयगामिनी ।
व्रतादौ त्रिमुहूर्त्ताऽपि स्वीकार्या वृद्धिगामिनी ॥४७॥
तत्र व्रतादि कुर्वीत वृद्धिह्रासादिकारणम् ।
यदा पक्षक्षयं याति तदा स्यादापराह्णिकी ॥ ४८ ॥
उदयास्तगता पूज्या तिथिर्वृद्धिक्षये तिथेः ।
व्रतस्वीकरणे चैतदुक्तं श्लोकचतुष्टयम् ॥ ४९ ॥
गृहीत्वोदङ्मुखं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वासं कल्पयेद्बुधः ॥ ५० ॥
मैत्रे मुहूर्त्तमेतच्च कार्यं नो चेद्वृथा फलम् ।
आषढशुक्लैकादश्यां याम्यायनदिने तथा ॥ ५१ ॥
चातुर्मास्यव्रतं सर्वं स्वीकार्यं भुक्तिमुक्तिदम् ।
हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ॥ ५२ ॥
ब्रह्मचर्यमधःशय्या नक्तभोज्यं षडाचरेत् ।
दिवानिद्राऽन्ततं द्यूतं ताम्बूलं मद्यमासवम् ॥ ५३ ॥
कांस्यं मांसं मसूरं च चणकं कोद्रवं तथा ।
एकं मधु परान्नं च सुरा क्षौद्रं च मैथुनम् ॥ ५४ ॥
असकृज्जलपानं च लोभं वितथभाषणम् ।
क्षारं प्रतिग्रहं तैलं तिलपिष्टमहंकृतिम् ॥ ५५ ॥
व्यायामं व्यवसायं च कामं क्रोधं मदं तथा ।
दम्भं मोहं च मात्सर्यं तिलमुद्गादिभक्षणम् ॥ ५६ ॥

पुनर्भोजनमभ्यङ्गं षट्चिंशच्च महामुने ।
उपावासदिनात् पूर्वं परा हे च विवर्जयेत् ॥ ५७ ॥
असकृज्जलपानं च कुर्यात् पूर्वापराह्णयोः ।
एकादश्यां निराहारः स्थित्वा चैव परेऽहनि ॥ ५८ ॥
भोक्ष्यामि पुण्डरीकाक्ष शरण्यं मे भवाच्युत ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥ ५९ ॥
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।
सङ्कल्प्य पारणं चेति मन्त्राभ्यां क्रमशो मुने ॥ ६० ॥
एकादशीं प्रति स्त्रीणां शूद्राणामप्ययं विधिः ।
त्रयोदशी च दशमी कृष्णप्रतिपदा मुने ॥ ६१ ॥
रात्रिद्वयव्यापिनीं तां स्वीकुर्यात् सततं मुने ।
घटिकैकाऽप्यमावस्या स्याच्चेत् प्रतिपदिष्यते ॥ ६२ ॥
सैव व्रतोपवासादौ परविद्धा हि सोत्तमा ।
तृतीया पूर्णिमा तद्वत् पूर्वविद्धा मुनीश्वर ॥ ६३ ॥
इमास्तिस्रः पूर्वविद्धा अपि वा तदसंभवे ।
द्वादशी पूर्वविद्धैव सर्वदा मुनिसत्तम ॥ ६४ ॥
व्रतादौ पूर्वविद्धैव भवेत् कृष्णा चतुर्दशी ।
कृष्णाष्टमी क्षीयमाणा यद्येतेनान्यथा मुने ॥ ६५ ॥
व्रतादौ क्षीयमाणस्तु परविद्धोऽसितेस्मरः ।
ग्राह्यः शुक्ले वर्द्धमान इति वा नान्यथैव तु ॥ ६६ ॥
शुक्लतृतीया वैशाखे पूर्वविद्धैव साऽन्वया ।

विनायकचतुर्थी च तथा भाद्रपदेऽमला ॥ ६७ ॥
मध्याह्ने त्वनतिक्रान्ते यद्येवं स्यान्मुनीश्वर ।
स्त्रीकुर्कादुपवासे तु तद्विधे तु तदुत्तमे ॥ ६८ ॥
ते चापराह्णव्यापिन्यौ परिशुद्धे सुशोभने ।
दिने पूर्वार्धगामिन्यौ कलयावसरे इमे ॥ ६९ ॥
तयोः सत्योश्चापराह्णव्यापिन्योश्चापि ते न हि ।
तृतीयादौ षडंशं तु पूर्वं व्याप्यैव दूषयेत् ॥ ७० ॥
अपराह्णस्थोर्जशुक्ले चतुर्थी नागसंज्ञिता ।
परोपवास एवं चेन्न चेत् पूर्वैव गृह्यते ॥ ७१ ॥
नास्मिन् विचार्ये ह्रानिवृद्धी चतुर्थ्यन्या तु नेदृशी ।
अत्यल्पमुत्तराविद्धा ह्युपवासाय चाप्यलम् ॥ ७२ ॥
तदन्ते पारणं तच्चेत् प्रदोषव्यापिनीति च ।
सर्वमन्यद्व्रतं कार्य्यं नित्यमेकादशीव्रतम् ॥ ७३ ॥
पुण्याङ्गना विना योनिजातिभेदोऽत्र नोच्यते ।
यदा नारी व्रतं कुर्याज्जीवद्भर्त्तर्युपोष्य चेत् ॥ ७४ ॥
पत्युरायुःक्षयं कृत्वा स्वयं च नरके व्रजेत् ।
यत्पुंस्त्वभोजनात् स्त्रीणां भोजनत्याग एव हि ॥ ७५ ॥
व्रतं शुश्रूषणं तस्य तदाऽऽज्ञापालनं चरेत् ।
कामाकामात् कृतं पापमार्द्रशुष्केन्धनं क्रमात् ॥ ७६ ॥
भस्मसात् कुरुते वह्निरेकादश्युद्भवो मुने ।
यावन्त्यश्नाति सिक्थानि मोहाद्वा हरिवासरे ॥ ७७ ॥

व्याधितो वाऽपि तावन्ति व्रजेत् पापानि नारद ।
प्राशयेन्नवनीतं वा नैकादश्यां शिशूनपि ॥ ७८ ॥
योगिनोऽपि महात्मानो नाश्नन्त्यस्या व्रते रताः ।
एकादश्युपवासेन म्रियते यदि मानवः ॥ ७९ ॥
क्षुधार्त्तः शिवसालोक्यं गच्छेन्निष्कल्मषं मुने ।
विस्मृत्यैकादशीं मोहाद्द्वादशीपरतः स्थिता ॥ ८० ॥
उपोष्या द्वादशी तत्र यदिच्छेत् परमं पदम् ।
शोके वा यदि वा मोहे वर्षे वा समुपस्थिते ॥ ८१ ॥
सूतके मृतके वाऽपि न त्याज्यं द्वादशीव्रतम् ।
सूतकान्ते हरिं विप्रान् पूजयेद्भोजयेत् स्वयम् ॥ ८२ ॥
विधिनोपवसेद्विष्णुं विप्रांश्चान्यांश्च पूजयेत् ।
काम्यव्रतेषु सर्वेषु सर्वत्रैवं विधिस्त्वयम् ॥ ८३ ॥
तथाऽपि गणयेत् काम्ये न तथाकृतमेव तु ।
असामर्थ्यंशरीरश्चेत् काम्यव्रतमुपस्थितम् ॥ ८४ ॥
पुत्रेण धर्मपत्न्या वा कारयेन्मुनिवल्लभ ।
पत्नीव्रतं पतिः कुर्यादसामर्थ्ये तयोर्मिथः ॥ ८५ ॥
अन्यथा व्रतभङ्गेन त्वौषधैश्चैव सूतकैः ।
यः कुर्यात् पुत्रवित्तादिकाम्यमेकादशीव्रतम् ॥ ८६ ॥
आव्रतोद्यापनात् तस्य नामानि त्रीणि नारद ।
पुत्रवान् धनवान् मुक्तः पर्यायास्तेष्वनेकशः ॥ ८७ ॥
दिनत्रयेऽपि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।

एकादश्यां तु कृष्णायां शुक्रार्कदिवसे गृही ॥ ८८ ॥
न पारणं नोपवासं कुर्यात् पाते च मन्मतम् ।
एकादशीव्रतस्यैवं लक्षयित्वा यथोचितम् ॥ ८९ ॥
नामभिस्त्रिभिरुक्तैश्च कथान्ते सफलं व्रती ।
उक्तदोषेषु चानुक्तवेधेषु व्रतमाचरेत् ॥ ९० ॥
व्रतं तत्पारणं तत्राकृतिथिसंख्यानि हन्ति च ।
तेषु नक्तं हविष्यान्नमन्नोदनफले तिलम् ॥ ९१ ॥
क्षीरान्नाद्यं पञ्चगव्यं प्राणायाममथं क्रमात् ।
एवं यदैव वा गच्छेदुत्तरोत्तरमुत्तमम् ॥ ९२ ॥
व्रतभङ्गो हि नैवं चेद्व्रतं नैक उपस्थिते ।
अन्यं कुर्वीत दानचार्होमैरन्यं च वर्जयेत् ॥ ९३ ॥
वानप्रस्थो ब्रह्मचारी मुमुक्षुर्यतिरित्यपि ।
वार्ष्येः सर्वाश्रमस्थोऽपि वा कुर्वन् नित्यव्रतं मुने ॥ ९४ ॥
न तस्य सन्त्यक्तदोषो यत्तद्भक्ष्यं च नोचितम् ।
परविद्धाऽपि सा कार्या नारदैकादशी तिथिः ॥ ९५ ॥
पूर्वविद्धाऽपि सा ग्राह्या परतो द्वादशी न चेत् ।
शुद्धाऽधिका विद्धसमा चोत्तराऽनधिका यदि ॥ ९६ ॥
पूर्वा पुण्या गृहस्थानां यतीनामुत्तरा स्मृता ।
द्व्याधिकोत्तरा हीना व्यत्ययस्येयं यदीष्यते ॥ ९७ ॥
उत्तराऽनुत्कृष्टा सा सर्वेषामुत्तरैव चेत् ।
शुद्धहीना शुद्धसमा विद्धहीना च नारद ॥ ९८ ॥

सर्वेषामविशेषेण पूर्वैव फलदायिनी ।
फाल्गुनद्वादशी पुष्ययुक्ता गोविन्दसंज्ञिका ॥ ९९ ॥
शुक्ला शुक्ले द्वादशी तु माघे भीमाऽभिधा स्वयम् ।
आषाढे शयनाख्या स्यात् प्रबोधाख्या च कार्त्तिके ॥ १०० ॥
एकादश्यां द्वादशीपुण्यं पश्चैता दधुरेकशः ।
पारणं द्वादशीविद्धत्रयोदश्यां निहन्ति च ॥ १०१ ॥
द्वादशद्वादशीपुण्यं पराधीयां प्रयच्छति ।
सिंहार्के रोहिणीयुक्ता कृष्णा भाद्रपदाष्टमी ॥ १०२ ॥
रात्र्यर्धपूर्वपरगा जयन्ती कलयाऽपि वा ।
अभावे रोहिणीयुक्ता नभःकृष्णाऽष्टमी यदि ॥ १०३ ॥
मुहूर्तमपि वा श्रेष्ठा सैवाभावे तिथिर्मता ।
कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताऽष्टमी ॥ १०४ ॥
अभावे केवला सा चेदिति वेदविदो विदुः ।
मध्यरात्रिगता माघे शिवरात्रिचतुर्दशी ॥ १०५ ॥
कृष्णापक्षे जयन्ती च नोपेक्ष्ये विद्धिते अपि ।
नरस्य द्विगुणां छायामतिक्रम्य यदा रविः ॥ १०६ ॥
तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम् ।
दिनद्वयेऽप्यमावस्या मध्याह्नव्यापिनी यदि ॥ १०७ ॥
पैत्रे दैवव्रते ग्राह्या क्रमात् पूर्वापराऽपि च ।
अमा दृष्या भूतविद्धा मध्याह्नव्यापिनी न चेत् ॥ १०८ ॥
ग्राह्या त्वमा भूतविद्धा मध्याह्ने प्रतिपद्यदि ।

पूर्वमध्यापराह्णेषु देवमर्त्यपितॄन् यजेत् ॥ १०९ ॥
द्विगुणात्माधिकच्छाये चतुर्थे प्रहरे नरः ।
यः श्राद्धं कुरुते याति नरकं स तदा चिरम् ॥ ११० ॥
अतोऽपराह्णव्यापिन्यां पूर्वस्यां तु तिथिक्षये ।
कुर्वीत पार्वणश्राद्धं सर्वतिथ्यां व्रते रत ॥ १११ ॥
दिनद्वयेऽपि सा नो चेदपराह्णे मुनीश्वर ।
साऽन्याऽपि परविद्धैव कुरुते स्वस्तिकं ततः ॥ ११२ ॥
शुक्राद्यं शुक्रवारं च त्यजेच्छ्राद्धे स्वजन्मभम् ।
आमश्राद्धे दैविके तु पूर्वाह्णे ग्रहणे निशि ॥ ११३ ॥
पूर्वाह्णे लग्नकाले च वृद्धिश्राद्धं विधीयते ।
निशाऽपि पुत्रोत्पत्त्यादिनिमित्तं श्राद्धमिष्यते ॥ ११४ ॥
विना प्रातरादिनार्धादेकोद्दिष्टं विधीयते ।
आमेन वा हिरण्येन श्राद्धं माध्याह्निकं विदुः ॥ ११५ ॥
चतुर्दश्येव वर्ज्या स्यात् काम्ये नित्ये च पैत्रिके ।
एतयोस्तिथिवारर्क्षमन्यत् सर्वं च पूज्यते ॥ ११६ ॥
प्रत्यब्दं प्रतिमासं वा मृताहश्राद्धकर्मसु ।
सायन्तन्युत्तराभावे पूर्वविद्धाऽऽपराह्णिकी ॥ ११७ ॥
सायन्तनीयाभावे स्यात् परविद्धैव शस्यते ।
नित्यनैमित्तिकश्राद्धं दर्शश्राद्धादि चेतरत् ॥ ११८ ॥
अधिमासे न कर्त्तव्यं सेवाद्यं देवतादिषु ।
नभस्यकन्यकोर्ध्वार्धभागयोगेऽत्रधार्यते ॥ ११९ ॥

श्राद्धं त्वपरपक्षाख्यं नभस्यर्धदलेऽन्यथा ।
मीने धनुषि सिंहार्के न व्रतारम्भ इत्यपि ॥ १२० ॥
माघे मासि न सिंहेज्ये चेति केचिन्न तन्मतम् ।
ऊनेऽन्नदानग्रहणं(?) व्रतं कार्यं मनीषिभिः ॥ १२१॥
सूतके मृतके वाऽपि केचिदार्त्तव एव च ।
पूर्वःपूर्वः शुभः कालः सूर्यग्रहणसूतके ॥ १२२ ॥
सोमग्रहणकालेषु श्लाघ्यः कालः परःपरः ।
नाद्याद्यामत्रयादर्वाग्ग्रहणे चन्द्रसूर्ययोः ॥ १२३ ॥
विशुद्धमण्डलं दृष्ट्वैवोर्ध्वं वा प्रहरत्रयात् ।
रात्रौ स्नानं न कर्त्तव्यं दानहोमबलिक्रियाः ॥ १२४ ॥
प्रतिष्ठाजातकोद्वाहयज्ञग्रहणवर्जितम् ।
मध्यन्दिने पर्वसन्धिस्तत एवमथापि वा ॥ १२५ ॥
यागः स्वदिवसे कार्यः परतश्चेत् परेऽहनि ।
सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक्पर्यावर्त्तनाद्रवेः ॥ १२६ ॥
सा पौर्णमासी विज्ञेया यज्ञकालविधौ विधिः ।
यागात् पूर्वदिने कुर्यादन्वाधानं द्विजोत्तम ॥ १२७ ॥
अन्वाधानं तु सङ्कल्पप्राणायामपुरःसरम् ।
अन्वाधानं पाकहोमं नित्यहोमादनन्तरम् ॥ १२८ ।
कुर्यान्नैमित्तिकं कर्मानन्तरं नित्यकर्मणः ।
पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ॥ १२९ ॥
बह्वृचः श्रवणे कुर्युः सस्यसंपत्तिदर्शने ।

विशिष्टः श्रावणो मासः स्वाध्यायनामुपक्रमे ॥ १३० ॥
तद्दर्शोपान्तदर्भैस्तु कुर्यात् कर्माणि वत्सरम् ।
अयने विषुवे चैव शयने बोधने हरेः ॥ १३१ ॥
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ।
कार्त्तिके नवमी शुक्ला तृतीया माधवे तथा ॥ १३२ ॥
माघे मन्वादयः कृष्णे नभस्ये च युगादयः ।
आश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी तथा ॥ १३३ ॥
चैत्रे तृतीया ज्येष्ठस्य पूर्णिमा द्वादशी शुचौ ।
चतस्रः फाल्गुने द्वादश्यूर्जे कृष्णाऽष्टमी मुने ॥ १३४ ॥
मन्वन्तरादयस्तेषु तेषामेवोद्भवः क्रमात् ।
नभःफाल्गुनयोः पश्चामेका चैकादशी सिता ॥ १३५ ॥
वैशाखज्येष्ठपौषाणां पूर्णिमा फाल्गुनोर्जयोः ।
माघामलद्वादशी च नभस्यामलचन्द्रिका ॥ १३६ ॥
शुचिस्त्रिंशोऽष्टमी कृष्णा द्वितीया च युगेऽमला ।
मन्वन्तरान्तस्तेषामेष्वनध्यायेषु निर्गमः ॥ १३७ ॥
यथाऽऽज्ञप्तजनो मन्त्री राजानं प्रतिगच्छति ।
तथा मन्वादयः सर्वे ब्रह्माणमुपतस्थिरे ॥ १३८ ॥
तिस्रोऽष्टका अनध्यायाः सप्तम्याद्या मुनीश्वर ।
पर्वगादिषु मासेषु विषुवायनसंयुताः ॥ १३९ ॥
प्रशस्ता इति पञ्चाशत् तिथयः पार्वणे मुने ।
उपक्रमात्त्रिदिनं पक्षाः पञ्चदशापि च ॥ १४० ॥

उपक्रमेण पश्यन्तं सौख्यमुत्सर्जनात् परम् ।
रात्रयः शुक्लपक्षेषु कृष्णपक्षेषु कृत्स्नशः ॥ १४१ ॥
अनध्यायस्तथाऽन्ये ये ते च दृष्टप्रचोदिताः ।
तथा सेयं मुहूर्ताख्या याऽनध्यायस्य साऽपि च ॥१४२॥
अङ्गाध्यायन इत्युक्ताः स्वाध्यायाः सकला अपि ।
अधिकर्त्तव्यमेवाङ्गमङ्गित्वैकप्रयोजनात् ॥ १४३ ॥
श्रुतेस्तद्व्यतिरेकेण त्वङ्गित्वाभावसम्भवात् ।
पक्षादिमध्यान्त्योपान्त्या अङ्गानामङ्गिनामपि ॥ १४४ ॥
अनध्यायः प्रदोषश्च संध्यास्त्रिर्मध्यमा निशा ।
त्रयोदशी चतुर्थी च सप्तमी कलयाऽपि च ॥ १४५ ॥
रात्रिं स्पृशति सौनी स्यात् प्रदोषो यदि तत्र सः ।
रात्रेर्दिनचतुर्थो वा प्रहरः कथ्यते बुधैः ॥ १४६ ॥
तावानेव प्रदोषश्च पूर्वैस्त्रिंशांशकैर्मुने ।
आद्यास्त्रिंशांशनाड्यश्च चतुर्थो तूत्तरे मुने ॥ १४७ ॥
प्रदोषः पूर्वरात्र्यर्धं विरामघटिकाऽपि वा ।
मध्यन्दिने पर्वसन्धिरित्यादिषु न चिन्तयेत् ॥ १४८ ॥
दिनक्षपायुक्तदोषं श्लोकानां त्रिगुणाऽष्टसु ।
अर्कमानकलास्तस्य भुक्तिश्चेत् षष्टिनाडिकाः ॥ १४९ ॥
संक्रान्तिकालस्तद्बिम्बं यावत् चेत्रद्वयेऽपि सः ।
बिम्बमध्यं ग्रहस्यास्ति यत्र तत्र स्थितश्च सः ॥ १५० ॥
तस्मिन् परापरक्षेत्रे ग्रहे द्वे तु यथोचिते ।

भुक्तर्क्षेत्रमभुक्तर्क्षं तत् तथाऽन्यत्र नारद ॥ १५१ ॥
तिथिनक्षत्रयोगादेर्बिम्बमध्यं प्रबोधकम् ।
शुभाशुभं कृतं तस्मान्नैव चेत् तद्वृथा फलम् ॥ १५२ ॥
संक्रान्तेः प्रागभुक्तर्क्षं सार्धाः षोडश नाडिकाः ।
भुक्तर्क्षे च तावत्यः पश्चादिति हि नाडिकाः ॥ १५३ ॥
यत्र त्रिंशत् संक्रमस्य सर्वकालेषु नारद ।
या याः संनिहिता नाड्यस्तास्ताः पुण्यतमा मताः ॥ १५४ ॥
भुक्तर्क्षे वाऽप्यभुक्तर्क्षे स्नानदानादि कारयेत् ।
पर्याप्तमुभयं रात्रावेव चेत् तत् तथोच्यते ॥ ॥ १५५ ॥
भवनान्तं बिम्बमध्यं रात्र्यर्धात् प्रागुदेति चेत् ।
स्नानदानादिमध्याह्नात् कुर्यादूर्ध्वं गते दिने ॥ १५६ ॥
रात्र्यर्धादुपरि क्षेत्रे याति चेदन्यथाऽर्यमा ।
अह्न्यागामिनि मध्याह्नात् पूर्वं स्नानादि कर्म यत् ॥ १५७ ॥
यद्यर्धरात्र एवं स्यात् संपूर्णे रविसंक्रमे ।
तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु ॥ १५८ ॥
भुक्तक्षेत्रमभुक्तर्क्षं चोभयं च दिवाऽस्ति वा ।
याम्यायनं विष्णुपदं चाभुक्तर्क्षेऽतिपुण्यदम् ॥ १५९ ॥
षडशीतिमुखं चोदगयनं भुक्तवेश्मनि ।
विषुवत्युभयं तुल्यं सर्वमेतत् पुनान्यतः ॥ १६० ॥
चलसंक्रान्तितन्मात्रः संक्रमोपरि संक्रमः(१) ।

(१) 'चलसंस्कृततिग्मांशोः संक्रमो यः स संक्रमः'—पा० २ पु० ।

नान्योऽन्यत्र च तत् चेत्रं नैति तत्क्रान्तिकचया ॥१६१॥
भुक्तचेत्रमभुक्तर्चं वा विहायाह्नि संभवम् ।
वृथाऽन्यत्र कृतं कर्म भस्मनीव हुतं हविः ॥ १६२ ॥
तदभावे तदासन्नकाले चापि ह्यथेतरत् ।
क्रान्तेः पूर्णफलं केन्द्रप्रवेशादुभयं समम्(१) ॥ १६३ ॥
कालस्य निर्णयो ह्येतन्मृगकर्क्योः चपादले ।
अर्काह्ने शुक्लसप्तम्यां पुष्यर्चे चोत्तरायणे ॥ १६४ ॥
सप्तमीव्रतमन्विच्छेत् सर्वकार्यार्थसिद्धये ।
अष्टमीनवमीदग्धैर्ह्यर्धनारीश्वरव्रतम् ॥ १६५ ॥
नभस्ये रोहिणी षष्ठी व्यतीपाते यदीरिता ।
पुण्या कपिलषष्ठीह द्वादशी विजया हरौ ॥ १६६ ॥
कर्णभेऽर्के व्यतीपाते ह्यमा पौषी यदा भवेत् ।
अर्धोदयः पुष्यराशिं हरत्यर्धमुपेक्षितम् ॥ १६७ ॥
योगरूपाः पुण्यकालास्तिथ्यादीनां मुनीश्वर ।
कथ्यन्ते तेन येष्वस्ति वेदघोष इति स्थितिः ॥ १६८ ॥
अलं मुहूर्तमात्रं वा स्नानादिभ्यो हि योगजम् ।
रात्रौ दिवा पञ्चदश मुहूर्त्ताः कुतपोऽष्टमः ॥ १६९ ॥
मैत्रस्तृतीयः पुत्राह्वः पुंनक्षत्राणि च रोहिणी ।
अश्विनी कृत्तिका हस्तस्तथाऽपि च पुनर्वसु ॥ १७० ॥

(१) 'त्वर्धप्रवेशादुभयोः समः'—पा० २ पु० ।

प्रौष्ठपद्द्वितयं त्रिष्णुः केचित् सौम्यमिति स्थितिः ।
इति ते कथितं वत्सान्यच्च वक्ष्यामि तत्त्वतः ॥ १७१ ॥

इति श्रीब्रह्मसिद्धान्ते तृतीयोऽध्यायः ॥ ३ ॥

अविक्षेपस्फुटक्रान्तेरुदक्चिप्तस्ततः पुरः ।
उदेति पश्चादेत्यस्तं वा चिप्तस्तत्तदन्यथा ॥ १ ॥
पश्चिमस्थः प्रागुदेति पश्चात् प्राक्स्थोऽस्तमेति हि ।
अन्यथा चेदन्यथा दृक्कर्म यत् कल्पितं तथा ॥ २ ॥
विक्षेपस्तत्फलं स्याद्यद्यक्षभा द्वादशोऽङ्गुलम् ।
खमध्यग्रहयोर्मध्यं नतं क्षितिजकल्पना ॥ ३ ॥
तन्नतात् तद्दिनार्धं च फलं प्राक्सिद्धमेव हि ।
ग्रहणादन्ययोगे च कालभेदे तथैव हि ॥ ४ ॥
दृक्क्षोन्नत्युदयास्तेषु दृक्कर्मादाविदं स्मृतम् ।
क्रमचापोत्क्रमज्याभ्यां क्रान्तिः सचिग्रहस्य च ॥ ५ ॥
त्रिज्या चेन्मध्यदृष्टानां क्षेपलिप्तान्तरे पुनः ।
दृक्कर्मस्थो नतः प्राक्स्थ इव पश्चादिति स्थितिः ॥ ६ ॥
दृश्यते यः क्रान्तिदेशो भेदाभेदे यथाक्रमम् ।
तत्तन्मेरुदिगंशानामल्पः स्याद् दृश्यते तथा ॥ ७ ॥
स्खलनं मध्यकक्षायामधिकस्त्वल्पमन्यगम् ।
तदर्धमुत्क्रमज्यैषा तादृक् खण्डैर्हि साधिता ॥ ८ ॥
द्वादशीज्या समैः खण्डैरुक्तं स धनुरुत्क्रमम् ।

अल्पत्वात् खवलनस्यैवं क्रमचापं स्मृतं त्विह ॥ ९ ॥
त्रिभहीनं मध्यमार्गे मन्दस्ववलनसूचकम् ।
क्रान्तिक्रान्त्यूनपरमक्रान्त्योस्त्वेवं तदल्पतः ॥ १० ॥
द्वितीयं पापदृष्टीनां दृक्कर्म मुनिसत्तम ।
द्वितीयमेव दृक्कर्म नेच्छन्त्युत्तमदृष्टयः ॥ ११ ॥
शास्त्रीयव्यवहारो हि लौकिकं निष्प्रयोजनम् ।
केचिदन्येऽपि नेच्छन्ति तादृक्प्रत्यक्षकारणात् ॥ १२ ॥
खमध्यगो मध्यलग्नमुदयात् क्षितिजोदयः ।
अस्तलग्नं सषड्भं तात्कालिकं स्वेष्टकालिकात् ॥ १३ ॥
गतागतैष्यकालाच्च गतैष्यं लग्नमात्मज ।
लङ्कोदयैर्मध्यलग्नं खमध्ये क्षितिजं न हि ॥ १४ ॥
लग्नग्रहाभ्यां कालश्च मुहुर्मुहुरिति स्थितिः ।
सूर्यात् प्राक्पश्चिमार्धे च शुक्लकृष्णे प्रकल्पयेत् ॥ १५ ॥
सूर्यास्तकालिकौ सूर्योदग्रहौ कृत्वा सषड्ग्रहौ ।
ततस्तत्काललग्नार्थं कृष्णे त्वर्कौ सषड्भकात् ॥ १६ ॥
अर्कात् तदन्तरप्राणैर्भास्करास्तमनात् परम् ।
स्थिरीकृतैरुदेत्यन्यः शुक्ले कृष्णेऽस्तमेति हि ॥ १७ ॥
दिनरात्रिग्रहात् पूर्वापरमार्धोदयात् खकात् ।
आसन्नार्कस्य तद्रश्मिच्छन्नो दृढ इतीरितम् ॥ १८ ॥
शुक्ले प्रागुदितप्राणात् कालांशाः षष्टिभाजिताः ।
कृष्णे तु तौ सषड्भौ तु भास्करोदयकालिकौ ॥ १९ ॥

कार्याः कालांशकास्तद्वदनकास्ते सकृद्द्वयोः ।
सूर्यात् पश्चिमतोऽत्यन्तं यातुर्यः स क्षमः स तु ॥ २० ॥
कृष्णो स्वमुदयं शुक्ले गच्छन्त्यन्येऽन्यथा मुने ।
द्वादशात्यष्टिमन्वीशदिक्तिथिः शीतगोः क्रमात् ॥ २१ ॥
अस्तांशा द्वादशाष्टौ च वक्रिणोर्बुधशुक्रयोः ।
तथा महत्त्वादनयोर्दूरत्वादितरस्य च ॥ २२ ॥
मूलात्रयं विशाखार्द्रामित्रदस्राहिवह्नयः ।
दृश्यन्ते पञ्चदशभिः शेषाण्यत्यष्टिभागकैः ॥ २३ ॥
मघाचतुष्कं श्रवणाद्वयं धात्र्भवासवाः ।
पुनर्वस्वभिजिच्चाच मृगव्याधप्रभञ्जनः ॥ २४ ॥
अगस्त्यो ब्रह्महृदयं शक्रांशैरनिलेन्दुभिः ।
मृगशीर्षं च भरणी पुष्योऽग्निः सप्तकांशकैः ॥ २५ ॥
तत्त्वाधिकांशा यस्योदक्क्षेपांशा नास्तगो भृशम् ।
एभ्योऽधिकोनैः कालांशैः क्रमाद्दृश्या अदर्शनाः ॥२६॥
तदन्तराद्दिनादिः स्यात् कालो गत्यन्तरैक्यजम् ।
तत्कालांशोदयप्राणाः स्वांशराशिकलामितिः ॥ २७ ॥
फलेच्छया तत्क्षेत्रांशैर्दृश्यताऽदृश्यताऽपि वा ।
सैव व्येकोदितांशैस्तु दृक्सिद्धं स्यात् क्वचिन्मुने ॥ २८ ॥
अल्पायुषां पाखण्डिनां गन्धर्वनगरादिवत् ।
खमध्यक्षितिजे दोःकोट्याश्रयैर्मौर्विके तयोः ॥ २९ ॥
द्वभाशङ्कुर्मुने छाया व्यवहार इतीर्यते ।

त्रिज्या दृग्ज्या भवेच्छाया यदि कर्णोऽत्र कोटिजा ॥ ३० ॥
लम्बज्यायां कोटिजीवा परमायां तु सोद्भवा ।
त्रिज्यायां कोटिजीवायां कियतीति विशेषतः ॥ ३१ ॥
परिधिः कियतीत्येवं शङ्कुच्छेद इतीरितः ।
स्वदिनव्यासार्धकर्णौ तौ च शङ्कौ स एव च ॥ ३२ ॥
कियान् स तस्मिंस्त्रिज्यायामुन्नतज्येति साधिता ।
त्रिज्याधिकोनोदगर्वाक् चरमौर्व्योऽन्त्यमौर्विका ॥ ३३ ॥
मध्यचितिजमध्यैक्यात् सा नतज्या मता दिवा ।
तदुत्क्रमधनुःप्राणास्तत्प्राणा न प्रभा यतः ॥ ३४ ॥
व्यासार्धे लम्बजीवायां त्रिज्यया च समा मुने ।
कल्प्यः शङ्कुस्तदा तस्मात्रिज्यश्चेद्द्वादशाङ्गुलः ॥ ३५ ॥
छायाकर्णौ वा दिनार्धे क्रान्त्यक्षाभ्यां भुजांशकैः ।
इष्टक्षोन्नत्यूनबिम्बार्धयुतिच्छायानतासुभिः ॥ ३६ ॥
कृष्णे शुक्लेऽपि पक्षे प्रागिनेन्द्वोश्चेन्न भिद्यते ।
तज्ज्योनं च दिनार्धाप्तं नतघ्नं चापि तत् किल ॥ ३७ ॥
अनुक्तं यत एवैतदन्यप्रश्नचतुष्टये ।
अबिम्बकस्तु दर्शेऽधःस्थितः सूर्यान्न दृश्यते ॥ ३८ ॥
पौर्णिमायां तदन्तःस्थैः संपूर्णः सूर्यरश्मिभिः ।
अन्यत्र यावान् विप्रकर्षस्तावच्छुक्लं विधोर्विधिः ॥ ३९ ॥
चन्द्राद्यच तदाशायां समो दक्षिणतः शशी ।
अङ्गाध्यायी शौनकस्य मेरुवासीत्यतः समम् ॥ ४० ॥

ह्रासवृद्धी ययोर्दृष्टवरेणास्य तिथिं प्रति ।
क्षीयमाणकला दृष्टा अन्येऽप्येककलं तथा ॥ ४१ ॥
वर्धयन्ती क्षीयतेऽसौ एवं वेद न हि क्वचित् ।
अविम्बनानामन्येषां दूरस्थत्वादिदं न हि ॥ ४२ ॥
येन दर्पणवत् स्वच्छा जायन्ते तेषु चांशवः ।
लाञ्छनं प्रतिविम्बं गोगर्भितीन्दुविनांशुभिः ॥ ४३ ॥
चन्द्रेण शौक्ल्यं वाऽन्येषां तद्दृष्टेऽप्यस्ति यत् ततः ।
विम्बं सितासिते पक्षे व्यर्केन्दोरर्कभागतः ॥ ४४ ॥
रवीन्दुमध्यक्रान्तिज्या विषुवत्कर्णसंगुणा ।
मध्याह्नाच्चन्द्रशङ्क्वाप्ता उत्तारावग्निदिशौ रवेः ॥ ४५ ॥
स्टणं धनं चात्तभायां भुजोऽर्कादिन्दुदिङ्मुखः ।
यस्याल्पा ज्या खमध्येन्दुच्छाया कर्णहता तथा ॥ ४६ ॥
हाग्दृशङ्कुजीवायाः कल्पना या रवीन्दुवत् ।
खमध्याद्विषुवत्कक्षां मध्यतो ज्यां निरस्य हि ॥ ४७ ॥
भुजा अपि लयं यान्ति कर्णो हिदशकोटिजः ।
अर्कसंज्ञितदिङ्मध्याह्नाद्शङ्कुस्तथा भवेत् ॥ ४८ ॥
प्राक्पश्चात्समुखीं शुक्ले कृष्णे कोटिं प्रसार्य तत् ।
बाहुकोट्यग्रगं कर्णकोटिकर्णयुतेर्विधोः ॥ ४९ ॥
विम्बं तदूर्ध्वमानेन लिखेत् कोट्याश्रयेण च ।
प्राग्रेखे याम्यरेखे च तदन्तर्मध्यमत्स्यतः ॥ ५० ॥
कर्णेन तन्मुखं शुक्लं कृष्णं वा परभागतः ।

तदा दत्वाऽग्रयाम्योदङ्मध्यमत्स्यद्वयस्य च ॥ ५१ ॥
मध्यसूत्रयुतेश्चापं बिन्दुं त्रिस्पृग् लिखेदिह ।
कोट्या साधितयाम्योदग्रेखान्ते श्टङ्गमुन्नतम् ॥ ५२ ॥
अनेकगुणकच्छेदैरत्रांशाश्छेदसंमितान् ।
द्वन्द्वशो नाशयेद्वाऽपवर्त्तयेदिच्छयैव तु ॥ ५३ ॥
बाहुसिद्धो हि यश्छेदस्तदुत्पत्तौ हरा गुणाः ।
गुणगुण्या हरा इत्थं विज्ञेया अन्यथा यदि ॥ ५४ ॥
तावत् स्वदेशलम्बज्या खव्यासार्धं यथा तथा ।
तां त्रिज्यां कल्पयेच्छायां व्यवहारसुखप्रदम् ॥ ५५ ॥
तथा क्रान्तिज्यका सत्यग्रज्येति परिकीर्त्तिते ।
क्रान्तिज्याविषुवत्कर्णाहताऽग्रज्याऽपि भास्करैः ॥ ५६ ॥
सा चेत् त्रिज्येष्टभाकर्णास्तदा ग्राह्योऽङ्गुलादिका ।
क्रान्तिज्या चेष्टकर्णघ्नी लम्बज्याप्ताऽङ्गुलादिका ॥५७॥
खशङ्कुतुल्यक्रान्तिज्याग्राङ्गुलं विषुवश्रवः ।
अर्धाङ्गुलफलं वा मध्येषुकर्णौ न्मितीतरौ ॥ ५८ ॥
मध्यात् प्राक् पश्चिमाशा या सममण्डलमुच्यते ।
सायं प्रातर्मध्यह्नस्त्रमेरुश्चोदयद्वयम्(१) ॥ ५९ ॥
उन्नागस्था प्राच्यपरा या रेखा सममण्डलात् ।
उन्मण्डलं तयोर्मध्यं सर्वत्र विषुवत्प्रभा ॥ ६० ॥
विषुवन्मण्डलादेषा छायाग्रे विषुवाऽत्र हि ।

(१) सा वृत्तमध्येऽत्यन्यत्वं मेरुश्चेदङ्गुलद्वयम् । इति—पा० २ पु० ।

लघुच्छायाग्रविषुवन्मध्यज्याग्रार्धमुच्यते(१) ॥ ६१ ॥
सा रेखोन्मण्डलाद्वाग्रे सदाऽन्याग्रा ह्यतिष्ठत।
उन्मण्डलादुदक्छायायाम्यक्रान्तात्रपागुदक् ॥ ६२ ॥
भुज इत्युच्यते मध्यं समण्डलभाग्रयोः ।
अतो माध्याह्निकी छाया नित्यं माध्याह्निकी द्विज। ६३॥
यदा दिनार्धोदक्क्रान्तिः स्यात्तच्छाया तदा न हि ।
रवेः शङ्क्वग्रसाम्यत्वाच्छायास्तत् प्रतिदृश्यते ॥ ६४ ॥
यदोदक्क्रान्तिरक्षोना तदोदगुदितो ग्रहः ।
उदगस्तं यथादृष्टि सममण्डलमेव च ॥ ६५ ॥
क्रान्तिज्या विषुवच्छाया यदि स्याद्विषुवश्रवः ।
सममण्डलशङ्कुस्थच्छायाकर्णौ तु पूर्ववत् ॥ ६६ ॥
अक्षभा द्वादशाभ्यस्ता लम्बाक्षज्याविभाजिता ।
सममण्डलगे सूर्ये कर्णौ क्रान्तिज्यया सकृत् ॥ ६७ ॥
छायाकर्णावक्षभायां तदाऽग्रावभुजः स तु ।
सममण्डलशङ्कुर्वा त्रिज्या तेनार्कताडिता ॥ ६८ ॥
शङ्कुयाम्योत्तरा त्रिज्या कल्प्यार्धं तत्कृतेस्तथा ।
दोःकोटिमध्यज्यावर्गं तन्मध्ये सार्धभं यतः ॥ ६९ ॥
पूर्वापरां कोटिकृतिं तदेव मनुतान्मुने ।
दोर्ज्याक्षभाकोटिकृत्योः कल्प्या त्रिज्याकृतिर्युतिः ॥७०॥
अर्कच्छायार्कवज्ज्ञेया यदा तावत् तदाऽग्रजा ।

(१) इष्टच्छायाग्रविषुवन्मध्यमग्रार्धगं मुने इति—पा० २ पु० ।

फलमित्युच्यते तावत् तद्व्यक्षक्षितिजान्तरम् ॥ ७१ ॥
त्रिज्यावर्गार्धमध्यार्धरात्रिज्याऽवर्गमेव तु ।
अग्रज्यावर्गहीनं तत् कोणार्कोदयमध्यगम् ॥ ७२ ॥
तत्कालत्रिभजावर्गो यदि शङ्कुकृतिर्भवेत् ।
कोटिज्याकृतिरेषा हि कर्णीत्याहुरागमाः ॥ ७३ ॥
पलवर्गो बाहुवर्गः कर्णः शङ्कुद्वयोद्भवः ।
स कोणस्थग्रहो व्यक्षक्षितिजान्तर एव हि ॥ ७४ ॥
सद्दकफलः सखशङ्कुः खखार्धफलवर्जितः ।
ऊर्ध्वाधःस्थं खकं व्यक्षक्षितिजाद्यदवागुदक् ॥ ७५ ॥
याम्यायां विदिशोः शङ्कुः स शङ्कोर्दक्षिणोत्तरा ।
मध्यच्छायातो भुजज्या सौम्यतो दक्षिणोत्तरा ॥ ७६ ॥
याम्यतोऽक्षक्रान्तिरक्षा अक्षज्या लम्बजा यदि ।
रवौ चरत्युत्तरयोः प्राग्वत् कोणाक्षभाश्रुतिः ॥ ७७ ॥
द्वादशाक्षप्रभा क्रान्तिक्षेत्रं मेषादिगो रविः ।
कर्कादौ प्रोज्झ्य चक्राधीत् तुलादौ भार्धसंयुतः ॥ ७८ ॥
मृगादौ प्रोज्झ्य भगणात् बाहुर्गम्याद्वियुक्पदे ।
चलसंस्कृतसूर्योनच्छायार्के भाजिते क्रमात् ॥ ७९ ॥
प्राक्पश्चान्मध्यरेखातो देशः स्वीयस्तदन्तरम् ।
देशान्तरफलं भानोर्युक्त्याऽन्यत् सकलं मुने ॥ ८० ॥
छायार्कक्रान्तिराशाः खुम्नलाः खखमिनादिके ।
छायार्के त्वृणमूने प्राक् पश्चाच्चक्रं च लम्बते ॥ ८१ ॥

कोणच्छायाकृतिदलात् पदं वा त्रिज्यया हृतम् ।
कोणात् कर्णहृते क्रान्तिज्यातश्छाया तथा रविः ॥८२॥
क्रान्तिज्येष्टाग्राङ्गुलाद्वा भाकर्णाभ्यां समाध्वनि ।
भुजाङ्गुलं भुजश्छाया वर्गां कोटिस्तलाविधः ॥ ८३ ॥
शङ्कुपूर्वापरा रेखा तथाऽन्या मध्यमत्स्यजा ।
अङ्घ्रिः समीकृतस्थाने कल्पना द्वादशाङ्गुलम् ॥ ८४ ॥
व्यासार्धाङ्गुलमुत्सेधः षडंशव्याससमेव च ।
छायामध्यशलाकाभ्यां छायाग्रज्ञानदुर्बलः ॥ ८५ ॥
मध्ये तून्नतशिखरं नखाद्रि७२०व्यङ्गुलोचितम् ।
स्वाङ्गुलैनैव सर्वत्राताङ्गुलज्ञानकारणम् ॥ ८६ ॥
सूच्यग्रेणाष्टकृत्तस्य प्रोतेनाङ्कितमध्यगम् ।
स्थापयेत् प्रान्ततश्छायां शङ्कोर्यत् तदमध्यतः ॥ ८७ ॥
छायाग्रं यत्र भूवृत्ते पूर्वाह्णे प्रत्यगेव तत् ।
मध्यात् तथाऽपराह्णेऽर्के दिशि शङ्कुं पिधाय च ॥ ८८ ॥
प्राचीं निर्दिश्य भाग्रेण व्यस्तं बाहुं प्रभाग्रतः ।
कोटी यथार्हं संप्रसार्य दोःकोट्योर्मार्गगां तथा ॥ ८९ ॥
रेखां प्राच्यपरां कुर्याद्भुजज्ञाने फलं यदि ।
ततस्तयायोर्याम्यगेऽर्के वर्धते बाहुरुत्तरा ॥ ९० ॥
प्राचीति वै जायतेऽर्कं ततस्तत उदग्गते ।
भुजस्ततो दक्षिणाग्रप्रभा प्राच्यग्रदिग्गता ॥ ९१ ॥
अग्रान्तरं तत्प्राग्विन्दोर्यन्मुखोऽर्कस्तदाचरेत् ।

तद्दिङ्मुखं प्रसार्यं प्राग्बिन्दुशुद्धं हि निःक्षिपेत् ॥ ९२ ॥
तत्र पूर्वापरा रेखा तन्माध्याद् दक्षिणोत्तरा ।
सममण्डलमेतस्मान्मत्स्येन मुनिसत्तम ॥ ९३ ॥
द्वित्र्यङ्गुलादिको मध्यच्छायात्रत्तदलं यदि ।
अग्रा ज्ञानेन चैवं स्याच्छङ्कुश्चेदुन्नतं किल ॥ ९४ ॥
कालस्तु पञ्चोना नाड्यस्तन्मध्यस्तत्त्वलिप्तिकाः ।
नाध्येति क्रान्तिरेकाह्ने मध्याह्ना कलयाऽपि वा ॥ ९५ ॥
अतोऽग्राङ्गुलमेकं वा द्व्यङ्गुलं न हि सिद्ध्यति ।
देशाश्च सुस्फुटा एव भवन्ति मुनिसत्तम ॥ ९६ ॥
चतुरस्रं यार्द्दिष्टं तत्कर्णार्धशलाकया ।
कोणं वाऽपि शलाकाभ्यां तावतीभ्यां दिगन्ततः ॥ ९७ ॥
यद्वा विस्तरसूत्राग्रदिशोर्मध्यं विदिश्यपि ।
निक्षिप्य चतुरस्रं तु वंशे तु स्थापनादिषु ॥ ९८ ॥
सत्यून्नतेऽर्धनाड्यूने दुर्दशा स्यात् प्रभा मुने ।
दुर्दशायां यथाछाया विन्यस्येत् तद्वयादिशम् ॥ ९९ ॥
चापस्थनत्रयस्याग्रे छायामर्गा मुनीश्वर ।
ज्यासंख्या चत्वतुर्विंशत्यधिका नतसम्भवा ॥ १०० ॥
तदाधिक्ये क्रमज्या त्रिज्यान्विता हि नतोत्क्रमा ।
चरक्रमज्या सत्रिज्या भवेद्न्त्या ततः सुत ॥ १०१ ॥
त्रिज्याधिकक्रमधनुरेवमुक्तं समासतः(१) ।

---

(१) त्रिज्याधिकक्रमधनुस्ततत् त्रिभेण युतं धनुः । इति—पा० २ पु० ।

अन्यत्र तूक्तमज्याभिराधिक्यादुभयं तथा ॥ १०२ ॥
शङ्कोस्तज्यांशाङ्गुलैस्तु वृत्ते क्रान्त्या यथोदितम् ।
उदयास्तमनस्थानं मध्यं ज्ञात्वा नतांशकैः ॥ १०३ ॥
तच्चापदिननाडंशैर्दिङ्मध्ये न प्रभापदम् ।
विभज्य वा कालबोधः कालखण्डं प्रकल्प्य वा ॥ १०४ ॥
निधाय वृत्ते प्राक्पश्चाच्छङ्कोर्मध्याह्नभागगे ।
कोटिज्यांशाङ्गुलोत्सेधं मध्यं शङ्कोरुपर्यपि ॥ १०५ ॥
ब्रह्माण्डमध्यं सूच्यग्रे शङ्क्वग्रं नाडिकांशतः ।
शङ्क्वग्राच्च प्रभामार्गस्पृक्सूत्रैः कालवेदनम् ॥ १०६ ॥
गोलार्धमध्येव्यासार्धयष्ट्या वा कालवेदनम् ।
क्रान्त्या मध्यनतेन प्रत्यग्रमत्राङ्कनं सुखम् ॥ १०७ ॥
धनुर्वेद्यं विधिः कल्प्यो नतदिश्युपमस्तकम् ।
धरारन्ध्रे मध्यमानं प्रोतयेन्न च मध्यतः ॥ १०८ ॥
लम्बसूत्रेण चक्रस्य क्रमाङ्कैर्ज्ञायते क्वचित् ।
समाङ्कैः कालविज्ञानं मासं प्रत्यनुपाततः ॥ १०९ ॥
चेष्टानुप्रतिनाडीनां पञ्चनिश्वासतो यदि ।
कुजो मयूरो वा स्यातां किं ततः शाल्मलोद्भवौ ॥ ११० ॥
नरं कपिं मयूरं वा स्थूलवेणूदरं मुने ।
कर्णादघ्नं पूर्णजलं पृष्ठच्छिद्रं प्रकल्पयेत् ॥ १११ ॥
न्यस्तं तोये च तत् काष्ठं तं बद्ध्वा वदनाद्बहिः ।
तावत्येवाङ्कनं कालश्चिह्नेनानेन गम्यते ॥ ११२ ॥

गोपयेज्जलनिःस्रावं मध्येऽद्धं नमनं तथा।
लम्बसूत्रं प्रचङ्क्रमानं षष्ट्यङ्कं च समान्तरम् ॥ ११३ ॥
रक्तातन्त्वादिना यावन्नाडीषष्ट्यान्तरेति यत्।
ततो निरन्ध्रे ह्यष्टास्तान् पूरयेच्चोपकज्जलैः ॥ ११४ ॥
अमलेऽम्भसि वा कुण्डे पलानां दशभिः कृतम्।
ताम्रपात्रमधश्छिद्रं चतुरङ्गुलमुच्यते ॥ ११५ ॥
हेममाषचतुष्केण ग्राह्याऽत्राननविस्तृतौ।
दशाङ्गुलकमुत्सेधे षष्टिर्मज्जत्यहर्निशम् ॥ ११६ ॥
तत् पात्रं यादृगपि वा यद्येवं तच्च गृह्यताम्।
कपालयन्त्रेणानेन कालो ज्ञेयः स्फुटेन च ॥ ११७ ॥
देवदारुः शिवतरुः खदिरो रक्तचन्दनः।
शङ्कर्थं स्वच्छनिम्बाद्या ग्राह्या यज्ञीयभूरुहाः ॥ ११८ ॥
एवं हस्तोच्छ्रितः शङ्कुरधोहस्तनिखातगः।
उत्सेधश्चक्षुषा कल्प्यो द्वादशाङ्गुलवानिति ॥ ११९ ॥
पश्येद्यत्र स्थितो योऽयं तदग्रे दर्पणे सुखम्।
दिवा निरूप्यो भाकर्णो निरूप्यौ चक्षुषः सुखम् ॥ १२० ॥
तादृक् शङ्कुद्वयं ग्राह्यं यथादिग्भ्रमणास्थितम्।
ग्राह्यान्तरक्षेपमध्यमागमानां विवेचनैः ॥ १२१ ॥
इति ते कथितं विप्र तथाऽन्यत् तत्त्वतः शृणु ॥ १२२ ॥

इति ब्रह्मसिद्धान्ते चतुर्थोऽध्यायः।

समागमो वा युद्धं वा भौमादीनां परस्परम् ।
नो भावीति मुनिश्रेष्ठ चन्द्रेणैव समागमः ॥ १ ॥
समलिप्तौ यदा स्यातां दृक्कर्माणौ मुहुः समौ ।
तदा तदन्तरच्छेपे मानैक्यार्धसमे सति ॥ २ ॥
अन्योन्यस्पर्शमानत्वादुल्लेखं युद्धमेव तत् ।
क्षीने भेदः समुच्येत चापसव्यं तथाऽधिके ॥ ३ ॥
आरादंशार्धमंशूनां व्याप्तिर्हि तु शशीनयोः ।
आब्रह्माण्डं कपालं तत्स्वच्यंशे तद्ग्रहान्तरे ॥ ४ ॥
रश्मिसंमीलनादंशुर्विरुद्धो यद्विमांशुमान् ।
समागमश्चेत् प्रख्यातस्ताराविम्बसमागमः ॥ ५ ॥
त्रिज्यांशाङ्गुलषष्ट्यग्रे तिर्यङ्मध्यांशकाङ्गुलम् ।
शलाकां स्थापयेन्मध्ये दण्डमूलं च पश्यता ॥ ६ ॥
सभेदयोगदृश्यौ तौ द्वौ शलाकाग्रयोः खगौ ।
मनःपूर्त्यै ग्रहाणां चाप्येवं योगं प्रसाधयेत् ॥ ७ ॥
द्वयोऽप्यल्पांशके यस्या याम्यः क्षेपोंऽशकद्वयात् ।
भवेदभ्यधिको भिन्द्याद्रोहिण्याशकटं हि सः ॥ ८ ॥
नाणुरेकोऽपसव्ये चेन्नापसव्यं तदिष्यते ।
तथा समागमेऽणुश्चेदेकोऽसावसमागमम् ॥ ९ ॥
अस्थूलावनणू द्वौ चेदुदक्स्थो दक्षिणस्थितः ।
स्थूलाणुप्रथमप्रष्णोऽपीत्येवार्धत्रयं स्मृतम् ॥ १० ॥
साम्येऽपीत्यपिशब्देन सौम्येऽपीह च कीर्त्तितम् ।

तदुद्दिष्टाविमौ शब्दावुदक्स्थो दक्षिणाश्रितः ॥ ११ ॥
अदीप्तिमान् विवर्णश्च वेपथू रूक्षदर्शनः ।
दुर्बलस्यापि योऽणुः सावस्थूलस्त्वयमन्यथा ॥ १२ ॥
न पीडितश्च(१) स्थूलोऽणुर्यद्दद्दृष्टान्तवाचिकौ ।
इमौ शब्दौ वृथा स्यातामुदक्स्थो दक्षिणाश्रितः ॥ १३ ॥
ताविमावेव याम्यादिस्थूलाख्यत्वं द्वयोदितम् ।
याम्येऽपि युक्तमेवास्मात् स्थानादिबलमत्र चेत् ॥ १४ ॥
अन्यत्र नैतदित्याद्यावैकृतात् तत् समीरितम् ।
स्थानादिबलभिन्नाऽत्र व्यर्था नैकाऽपि भा स्मृता ॥१५॥
प्रष्टास्वयेऽप्येवामुष्मिन् स्थितौ सूक्ष्मफलं स्मृतम् ।
समागमेऽपि सव्ये वा स्वल्पौ द्वावपि वेपथू ॥ १६ ॥
स्वोत्कटौ विग्रहौ द्वावादीप्तौ यदि समागमौ ।
उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी ॥ १७॥
जगतः कल्पनैवेयं भावाभावाय केवलम् ।
अन्योन्यमपि दूरस्थाः कथं युद्धं प्रकुर्वते ॥ १८ ॥
छादकोऽधःस्थितश्छाद्य उपरस्थः शशी रवेः ।
छादकश्छादिका राहो भूच्छाया मुनिसत्तम ॥ १९ ॥
यद्येवं प्रतिशुक्लान्तं स्यादृशं प्रत्युपप्लवः ।
सम्भवाद्रवितुल्येन्दोर्भूच्छायातुल्यशीतगोः ॥ २० ॥

(१) 'जयी जितश्च' इति—पा० २ पु० ।

छादकौ राहुकेतू तावन्योन्यस्यार्धचक्रगौ ।
एवं यद्युक्तदोषेऽपि नेति चेत् तद्वृहन्मुने ॥ २१ ॥
तथा चेच्छुक्लकृष्णान्तादुपरागस्तदाऽन्यथा ।
न चेद् द्विरिन्द्वोर्मासं प्रत्यर्कस्य प्रतिवत्सरम् ॥ २२ ॥
यद्यैक एव राहुः स्यान्न ग्राह्यस्तस्य भार्धगः ।
एकैकं ग्रहणं मासं प्रतिवर्षं प्रतीति च ॥ २३ ॥
प्राध्येण वटवल्मीकलक्षेऽङ्के वालिशः फणी ।
तद्वल्मीकस्थितो नास्ति कल्प्यो नार्कग्रहोऽस्ति चेत्॥२४॥
किं न स्याद्ग्रहणं शश्वत् कुतस्तत्र समं सदा ।
ग्रहणान्तरकालानां वैषम्ये किन्तु कारणम् ॥ २५ ॥
बहुप्रलापास्तेनोक्तास्तस्मादेदविरोधिनः ।
निमित्तकारणं राहुर्द्वयोरेवोपरागयोः ॥ २६ ॥
विक्षिप्तः फणिना चन्द्रः सूर्यमाच्छादयेदथ ।
मेघः स्वयं वा भूच्छायां प्रविशेद्ग्रहणं भवेत् ॥ २७ ॥
शीघ्रगामी शशी सूर्यं छायापश्चिमतोऽपि वा ।
प्रागत्यतीत्य तत्पश्चाद्ग्रहणं भास्करस्य च ॥ २८ ॥
प्राङ्मोक्षः शीतगोस्तुप्राग्ग्रहणं प्रत्यगेव हि ।
बह्मेन्दुग्रहविघ्नावरणान्नियमाः क्रमात् ॥ २९ ॥
फणीनभगणैक्याद्धि निमित्तग्रहणाधिपाः ।
समलिप्तौ यदाच्छाद्यच्छादकौ तत्र चेद्गुणः ॥ ३० ॥
विक्षेपजनको राश्यर्धेनः सोमग्रहस्तदा ।

अर्कग्रहेऽष्टांशकतद्दृष्ट्यंशान्नाधिकः स तु ॥ ३१ ॥
सर्वत्र सोमग्रहणं सोममेव हि दृश्यते ।
उभयोरन्तराभावाद्भूच्छायाजान्तरं शशी ॥ ३२ ॥
क्षेपो यदा तत्समः स्यात् तेनोद्दिश्य उपप्लवः ।
पूर्वापरान्तराभावादभावो लम्बनस्य च ॥ ३३ ॥
पर्वप्रतिपदोरेव ग्रासमोक्षौ विधोर्मुने ।
न हि लम्बनहेतुः स्यादेव याम्योत्तरान्तरम् ॥ ३४ ॥
तस्मिन् सति त्रिपादस्थोऽप्युपरागोऽस्ति तद्दिने ।
तावत्कालस्तु याम्योदगन्या तत्त्वात् प्रसिद्ध्यति ॥३५॥
तदन्तरेण नासीतेः सम्भवाद्भास्करग्रहे ।
सेन्दुक्षेपयुतोना दिक् तुल्यभेदे ग्रहान्तरम् ॥ ३६ ॥
साक्षाक्षोदक्मध्यलग्ने क्रान्त्योः साम्येन सम्भवः ।
पूर्वापरान्तराभावान्मध्याह्ने माऽस्तु लम्बनम् ॥ ३७ ॥
अस्त्यन्यदा तु पूर्वाह्ने ग्रासमोक्षौ तु दृश्यगौ ।
प्रतिपद्यपराह्ने तु तयाऽस्तो वा तदा क्वचित् ॥ ३८ ॥
अर्केन्द्वोरतिदूरत्वात् समीपत्वादिदं भवेत् ।
दृक्कर्मणैव तत्सिद्धो मध्यग्रहणसङ्गतौ(१) ॥ ३९ ॥
लम्बनावनती न स्तामपि सत्यन्तरद्वये ।
दृष्टलम्बनमन्यत्र यदीष्टाऽवनतिर्भवेत् ॥ ४० ॥
दृक्कर्म च तथा विप्र प्रत्यक्षं च ततस्तथा ।

(१) मध्यग्रहणसङ्गतौ—पा० २ पु० ।

दृक्कर्मणा हे च कृते व्यर्कं भासति तादृशे ॥ ४१ ॥
दृष्याच्चवनतेर्भावोऽखण्डत्वाच्च यथा तथा ।
मध्यजा मध्यलग्नस्य नतज्याह्नर्दलेऽर्कवत् ॥ ४२ ॥
चरसंस्कृतलग्नज्या लम्बज्या चेद्भवत्यपि ।
अन्त्यक्रमज्योदयज्या त्रिज्या चेन्मध्यमौर्विका ॥ ४३ ॥
कोटिजीवोदयज्या स्यादित्यूह्यं कोटिजास्फुटम् ।
मध्यज्याकर्णजा दोर्ज्यादृक्क्षेपो दक्षिणोत्तरः ॥ ४४ ॥
अन्यस्य दिङ्मध्यजीवाद्युज्याविक्षेपवर्गयोः ।
विक्षेपो दृग्गतिर्मूलं शङ्कुरित्यपि चोच्यते ॥ ४५ ॥
नतांशस्फुटदोःकोटिजीवे दृक्क्षेपदृग्गती ।
छेदः शङ्कुहृते कुज्या हृतिस्छेदसमा यदि ॥ ४६ ॥
मध्यलग्नार्कोत्थदोर्ज्याकोटिलम्बननाडिकाः ।
मह्त्त्वात् प्राग्गतेरिन्दुर्दशान्तात् प्राक्समोऽग्रुना ॥४७॥
प्राक्कपालेऽन्यथा पश्चात् तथा स्याद्द्युतिरप्युत ।
लम्बनं पर्वतः शोध्यं प्राक्कपालेऽन्यथा परे ॥ ४८ ॥
असकृल्लम्बनं यावद्भिः सिद्धं सकलं समम् ।
रवीन्द्वोर्लम्बनं चेति हरिजं चेति भास्करः ॥ ४९ ॥
वारयामास शब्दाभ्यामन्ययोगेषु लम्बनम् ।
अग्रस्तोऽर्को विमुक्तो वा दिवा नक्तं च कालयोः ॥५०॥
व्यक्ते क्षणाक्षयं दृश्यः पापिभिः सत्तमा इव ।
स्थिरीकृतं तद्धरिजं लम्बनं स्वाष्टमान्वितम् ॥ ५१ ॥

पितृभुक्तिविहीनानामेवं वा सर्वलम्बनम् ।
स्थिरीकृता दृग्गतिज्या सप्ताष्टाङ्कहृताऽपि वा ॥ ५२ ॥
अथ च्छेदार्थमाच्छेद्यं स्वाष्टमेन स्थिरीकृतम् ।
यदोदयज्याप्रभवो विना बाहुज्यया मुने ॥ ५३ ॥
मेषलग्नान्तरक्षेत्रज्यातो वा त्र्येकतः परम् ।
वर्गयोरन्तराद्दृक्क्षेप एष मार्गः सदा न सत् ॥ ५४ ॥
क्वचित् सन्नपि तत्रैतन्न क्वचिद्वाऽपि सन् किल ।
दृक्क्षेपत्रिभजा चेत् स्यान्मध्यभुक्त्यन्तरस्य च ॥ ५५ ॥
अर्कविध्वोः पञ्चदश नतिर्वा त्रिकृतिर्मुने ।
दृक्क्षेपसप्तत्यंशो वाऽत्रनतिर्ग्रहणं ततः ॥ ५६ ॥
नतिरल्यान्तरावान्त्यमार्गाभ्यां न हि दोषदा ।
दृश्यते द्वादशांशोऽपि स स्वच्छाद्ग्रह एव हि ॥ ५७ ॥
इन्दोर्लिप्तात्रयं वार्कस्योष्णत्वान्नतिरत्र न ।
ग्रहणं नामभेदो हि दुर्लक्ष्यमपि पुण्यदम् ॥ ५८ ॥
तेनान्तराल्पकग्रासो ग्राह्यं चेन्न समो यदि ।
सर्वग्रासोऽपि तिग्मांशोः क्वचिद्देशान्तरं सुत ॥ ५९ ॥
अर्केन्द्वन्तरसद्भावात् स्पर्शमात्रोऽपि नास्ति हि ।
पर्वाधिपतिसंख्यासु पातालग्रहणं हि तत् ॥ ६० ॥
स्नानादिषु तु न ग्राह्यं शुभेषु ग्रहयुद्धवत् ।
ग्रहणं ग्रहयुद्धं वा तत्तदह्निफलप्रदम् ॥ ६१ ॥
छन्नं ग्राह्याधिकं चान्याद्विमर्दग्रहणं च तत् ।

यावद्बिम्बैकदेशेन तावदेव भवेत् तदा ॥ ६२ ॥
विमर्दं ग्रहणां तावत्कालो वैमर्दिकः स्मृतः ।
चन्द्रबिम्बाधिकं सूर्यबिम्बमध्ये न कर्बुरम् ॥ ६३ ॥
तत्रैतत् कङ्कणाकारं कङ्कणग्रहणे मुने ।
तत्र कङ्कणकालः स्यादसौ वैमर्दिकस्तु यः ॥ ६४ ॥
स्थितिकालो भवेत् तावान् यावत् तिष्ठत्युपप्लवः ।
कर्णमानैक्यमानान्तरार्धक्षेपो भुजः स्वकः ॥ ६५ ॥
अन्या पूर्वापरा कोटिर्गत्यन्तरसमा यदि ।
स्थित्यर्धं च विमर्दार्धं क्रतात् स्यादष्टनाडिकाः ॥ ६६ ॥
कङ्कणार्धं विमर्दार्धं कङ्कणग्रहणे भवेत् ।
यासौ मोक्षो विमर्दार्धे नोनयुक्तः स एव सः ॥ ६७ ॥
निमीलनोन्मीलनाख्यं कङ्कणार्धेन तत् तथा ।
मध्यभुक्तः कृताः सर्वे स्फुटाः सन्तु तदा मुने ॥ ६८ ॥
असकृल्लम्बनं सूर्यग्रहणेऽन्ये सकृत् तथा ।
मध्यस्पर्शादन्तरं वा स्थित्यर्धादि स्फुटं स्वकम् ॥ ६९ ॥
स्थित्यादौ तु धनं वा स्यात् खमध्यहरिजान्तरम् ।
मध्याधिकोने क्षितिजखमध्यर्दिशि लम्बने ॥ ७० ॥
स्थित्यर्धादावृणं तच्चेदन्यथा हरिजान्तरम् ।
धनं कपालभेदेऽपि लम्बनैक्यं भवेन्मुने ॥ ७१ ॥
वृत्तं स्फुटं वा स्थित्यर्धं विमर्दार्धं च नारद ।
स्थित्यर्धं लम्बनं चापि युगपच्चासकृत् स्फुटम् ॥ ७२ ॥

अह्नो गत्यन्तरं कोटिः कुमध्येऽष्टममचजम् ।
तदर्कग्रहयो मध्यस्थित्यर्धघ्नं स्फुटं मुने ॥ ७३ ॥
स्फुटस्थित्यर्धं संभक्तं क्षेपो बाहुः श्रवस्ततः ।
ग्रासं तात्कालिकं प्रोज्झ्य मानैक्यार्धात् ततोऽन्यथा ॥ ७४ ॥
इष्टग्रहणकालः स्याद्ग्रासे स्पर्शमोक्षयोः ।
तत्र कालः स्फुटो ग्राह्यो ग्रास उन्मीलनं तथा ॥ ७५ ॥
अतोऽर्थेऽक्षविधिः कल्प्यो मध्याह्नात् तत ऊर्ध्वगः ।
याम्योत्तरं मुनिश्रेष्ठ लम्बनं तद्ग्रहान्तरम् ॥ ७६ ॥
नतोत्क्रमज्या द्युज्याघ्नी त्रिज्याप्ता क्रमकार्मुकम् ।
वलनं तद्भवेत् प्रत्यक्कपाले दक्षिणं हि तत् ॥ ७७ ॥
उत्तराभिमुखो याति तस्मिन् प्रतिपदं ग्रहः ।
प्राचीमध्यं ततं स्थानं याम्यं प्रत्यङ्गमादिशेत् ॥ ७८ ॥
उत्तरं वलनं प्राच्यां वेलावलनमेव तत् ।
ग्राह्यं क्रान्तिचतुर्विंशमध्यं वलनमापनम् ॥ ७९ ॥
यद्वेलावलनं प्राच्या उत्तरोत्तरतो ग्रहः ।
उदेति मकारादौ तत् प्राक् पश्चात् स्वर्णमत्र तत् ॥ ८० ॥
अन्यदोदेति कर्क्यादावन्यादावत्र तत्र तत् ।
इति निष्पन्नवलनं पारमार्थिकमुच्यते ॥ ८१ ॥
तत् क्रमज्या त्रिभज्या चेद्बोधयोर्वलनाङ्गुलम् ।
सप्तत्या साङ्गुलं वा स्यादत्यल्पं यत् तदन्तरम् ॥ ८२ ॥

नान्यजोत्क्रमजा कार्या नतासोः सन्निभग्रहात् ।
वेदास्तु प्रवदन्त्येवं नतकालापवादतः ॥ ८३ ॥

इति ब्रह्मसिद्धान्ते पञ्चमोऽध्यायः ।

छेद्यकेन विना छेदाः सुस्फुटा उपरागयोः ।
न ज्ञायन्ते यतस्तस्माच्छेदकज्ञानमुच्यते ॥ १ ॥
समभूदिङ्मध्यबिन्दोः सप्तवर्गाङ्गुलेन च ।
मानैक्यार्धेन वृत्तानां ग्राह्यार्धेन त्रयं लिखेत् ॥ २ ॥
तन्मध्यमं समासाख्यं बहिष्कं वलनाश्रयम् ।
ग्राह्यमण्डलमध्यस्थं दिशः प्रागेव साधिताः ॥ ३ ॥
यत्प्राच्यां वलनं देयं तद्यथादिशमेव हि ।
पश्चाद्यत् तद्विपर्यस्तं वलनं प्राक् प्रसिद्धये ॥ ४ ॥
आद्यन्तमध्यवलनैस्त्रिभिरेवाखिलं भवेत् ।
निमीलनोन्मीलनाभ्यां न किञ्चिदपि नारद ॥ ५ ॥
विक्षेपाग्रे यतश्चन्द्रः परस्माद्विसृज्य तत् ।
प्राङ्मुखं मध्यवलनं तद्विक्षेपैकता यदि ॥ ६ ॥
भेदे पश्चान्मुखं देयमिन्दोर्भानोर्विपर्ययात् ।
सव्यापसव्यमार्गाभ्यां तथा तन्नासदर्शनात् ॥ ७ ॥
तिस्रो रेखामध्यबिन्दुं प्रापयेद्वलनत्रयात् ।
तत्समासमयुतिभ्यां विक्षेपौ ग्रासमोक्षिकौ ॥ ८ ॥
वलनाभिमुखं बिन्दोः स्वविक्षेपं च मध्यगम् ।

विन्यस्तं विलिखेच्चापं त्रिक्षेपत्रितयाग्रगम् ॥ ९ ॥
इष्टच्छन्नोनमानैक्यदलसंमितयाऽऽस्पदम्।
शलाकया मध्यबिन्दोर्नीत्वा चापे ततो लिखेत् ॥ १० ॥
ग्राहकार्धेन तद्बिम्बं स्थानं चेत् स्पर्शमोक्षयोः।
निमीलनोन्मीलनयोर्बिन्द्वाद्ग्रहणमीप्सितम् ॥ ११ ॥
अध्वान्तत्वाद्विधोः सूर्यग्रहणं कृष्णमेव तत्।
ध्वान्तं छादकमिन्दोर्यद्विशेषोऽयं विधोस्ततः ॥ १२ ॥
धूम्रं कृष्णं क्रमात् कृष्णं कृष्णं ताम्रं विनिर्दिशेत्।
किञ्चिदूनाधिकैः पादैश्छन्नं कपिलमेव तत् ॥ १३ ॥
नदेयं यस्य कस्यापि रहस्यं शास्त्रमुत्तमम्।
अर्थलुब्धाय मूर्खाय साहङ्काराय पापिने ॥ १४ ॥
गुरुभक्तिविहीनाय पुत्त्रायापि वदेन्न हि।
एतद्देयं सुशिष्याय मुने वत्सरवासिने ॥ १५ ॥

इति श्रीशाकल्यसंहितायां ब्रह्मनारदसंवादे ब्रह्मसिद्धान्ते
द्वितीये प्रश्ने षष्ठोऽध्यायः॥

समाप्तोऽयं ग्रन्थः।



# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़ अर्थात् वाराणसीसंस्कृतपुस्तकमाला ।

इयं पुस्तकमाला खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमा ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्येऽपि विद्वांसः शोधयन्ति । ये च पुस्तकमालारम्भखण्डाद् ग्राहकास्तैः प्रत्येकखण्डस्य मूल्यम् ।।) अष्टौ आनका देयाः । य चान्ये ग्राहकाः मध्यस्थानि कानिचित् खण्डानि ग्रन्थमेकं वा गृह्णन्ति ते निम्नलिखितमूल्येन प्राप्स्यन्ति । यैर्महाशयगणैश्चेदत्र बहूनि पुस्तकानि संग्राह्याणि तैर्यथोचितसुलभमूल्येन तानि प्राप्यन्ते । विशेषवृत्तानि पत्रव्यवहारतो ज्ञेयानि ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | | |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| तन्त्रवार्त्तिकावशेषः टुप्टीका खण्डानि ४ | ४ | ० |
| कात्यायनमहर्षिप्रणीतशुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीका—गौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ (प्रथमभागे प्रथमद्वितीयकाण्डे पुण्यराजटीकासहिते खण्डानि ३ । द्वितीयभागे तृतीयकाण्डम् हेलाराजटीकासहितं खण्डानि ३) | ६ | ० |
| रसगङ्गाधरः सटीकः खण्डानि ९ | ३ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| पाणिन्यादि ३२ शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः सटीका खण्डानि ४ | ३ | ० |
| शुक्लयजुस्सर्वानुक्रमसूत्रं महर्षिकात्यायनप्रणीतं सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यं । खण्डानि ४ | ४ | ० |
| बृहद्वैयाकरणभूषणम् । पदार्थदीपिकासहितं खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः । सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख०८) | ८ | ० |